| ब्राह्मणप्रतीकम् | प०अ०ख० | भा० | पृ० |
|---|---|---|---|
| वज्रो वा एष यद् वषट्कारो ... | ३. १. ६. | २ | २३ |
| वाग्वै देवता चतुर्थं मह्वर्वह्त्येः ... | ५. १. ४. | ३ | २५ |
| वाग्वै सुब्रह्मण्या तस्यै सोमो राजा ... | ६. १. ३. | ३ | २२३ |
| वालखिल्याः शंसति प्राणा वै वालखिल्याः | ६. ५. २. | ३ | ३६५ |
| विश्वन्तरो ह सौषद्मनः श्यापर्णान् ... | ७. ५. १. | ४ | १३३ |
| विश्वे वै देवा देवतास्तृतीय मह्वर्वहन्ति | ५. १. १. | ३ | १ |
| वृषशुष्मो ह वातावत उवाच ... | ५. ५. ४. | ३ | १७८ |
| वैश्वदेवं शंसति यथा वै प्रजा एवं ... | ३. ३. ७. | २ | १३६ |
| वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते ... | ३. ३. ११. | २ | १५६ |
| व्याघ्रचर्मणा स्तृ वाल्गुतरलोम्ना ... | ८. २. २. | ४ | १८५ |
| शत मनूष्य मायुष्कामस्य ... ... | २. २. ७. | १ | ३४७ |
| शिरो वा एतद्यज्ञस्य यत्प्रातरनुवाकः | २. ३. ३. | १ | ३७८ |
| शिरो वा एतद्यज्ञस्य यदातिथ्यं ... | १. ४. ८. | १ | १८० |
| शिल्पानि शंसन्ति देवशिल्पान्येतेषां ... | ६. ५. १. | ३ | ३६० |
| षट्पदं तूष्णीशंसं शंसति ... | २. ५. ६. | १ | ४०५ |
| सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति सूक्तं | ५. ४. २. | ३ | १३० |
| सद्यो ह जातो वृषभः कनीन इति ... | ६. ४. ४. | ३ | ३१६ |
| समिधाग्निं दुवस्यताप्यायस्व ... | १. ३. ६. | १ | १३१ |
| स य इच्छेदेवंवित् क्षत्रिय मयं ... | ८. ४. १. | ४ | २३७ |
| सा यदाग्निरेन पदा समगच्छत ... | ३. ३. ३. | २ | १२२ |
| स वा एष पशुरेवालभ्यते ... | २. १. ६. | १ | ३०० |
| स वा एषो ऽग्निरेव यदग्निष्टोमम् ... | ३. ४. ५. | २ | २०३ |
| सा वा एषान्तताहुतिरेव यद् ... | २. २. ४. | १ | ३३० |
| सुकीर्तिं शंसति देवयोनिर्वै सुकीर्तिम् | ६. ५. ३. | ३ | ३७२ |

| | पृ० |
|---|---|
| ऐतरेयविषयसूची ... | १३ |
| सभाष्यैतरेय विषयसूची | १४ |
| तत्र प्रथमभागस्य ... | १४ |
| तथा द्वितीयभागस्य ... | ३४ |
| तथा तृतीयभागस्य ... | ५४ |
| तथा चतुर्थभागस्य .. | ६७ |
| ऐतरेयटीप्पनीविषयसूची | ७९ |
| ऐतरेयालोच्यनिसूची | ८८ |
| ऐतरेयाख्यायिकार्थसूची | १०६ |
| तत्र प्रथमभागस्य ... | १०६ |
| तथा द्वितीयभागस्य ... | १०७ |
| तथा तृतीयभागस्य ... | १०९ |
| तथा चतुर्थभागस्य ... | ११० |
| ऐतरेयाम्नातमन्त्रादिसूची | ११२ |
| ऐतरेयश्रुतदेशव्यक्तिनामसूची | १३० |
| ऐतरेयखण्डप्रतीकसूची ... | १३६ |

॥ अथ ॥

# ॥ ऐतरेयब्राह्मणकोड़पत्रम् ॥

( शिल्पशस्त्रेषु * मैत्रावरुणस्य † )

## ॥ वालखिल्यशस्त्रम् ‡ ॥

( हिङ्कारः § )

## ॥ हिं३म् ॥

( अभिहिङ्कारः ¶ )

## ॥ भूर्भुवस्स्वरो३म् ॥

---

* [illegible] "प्रोमस्मि"-इत्यादि ६ भा० ३४० पृ० द्रष्टव्यम्।

† [illegible] ब्राह्मणाच्छंस्यच्छावाक इति प्रस्थितयाज्यां होत्रकाः"-इति [illegible] प्रयाजेति मैत्रावरुणस्य मंत्रान्तरम्।

‡ [illegible] "षष्ठेऽहनि वालखिल्याभिर्वाचः कूटेन शंसेत्"—इत्यादि [illegible] ६ भा० ३८ पृ०। हिङ्कारादिर्वषट्कारान्तो वालखिल्यशस्त्रप्रयोग एषः।

§ "[illegible] इति हिङ्कृत्य"-इति आश्व० औ० १. ७. ६। "हिङ्कार एतराजो दशमः"—इति ऐ० आ० ६ भा० १ पृ०।

¶ [illegible] इति हिङ्कृत्य भूर्भुवःस्वरो मिति जपति"—इति, "एवोऽभिहिङ्कारः"—इति, "प्राक्शस्त्रेषु होत्रकाणामभिहिङ्कारः"-इति च आश्व० औ० १. २. ३, ४, २६। "सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेव यज्ञ प्रायश्चित्तिः कर्तव्या"—इति च ऐ० आ० ५ भा० १५७ पृ०।

( आहावः * )

॥ अध्वर्यो शोशोंसावो३म् ॥

( प्रतिगरः † )

॥ शंसा मोदैवो३म् ॥

( स्तोत्रियः ‡ )

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्धास इन्दुभो३म् § ॥
यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
तत्रा सदः कृणवसो३म् ॥
नहि ते पूर्तमक्षिपद् भुवन्नेमानां वसो ।
अथा दुवो वनवसो३म् ¶ ॥

---

* "अध्वर्यो शोशोंसावोमित्याह्वयते तृतीयसवने सप्रणवेन" इति ऐ० ब्रा० ३ भा० ५२, ५४ पृ० । "अध्वर्यो शोशोंसावो मिति तृतीयसवने शस्त्रादिष्वाहावः"—इति च आश्व० श्रौ० ५. १८. ३ ।

† "शंसा मोदैवोमिति अध्वर्युः प्रतिगृणाति पञ्चाक्षरेण"—इति ऐ० ब्रा० ३ भा० ५२, ५४ पृ० ।

‡ "आत्मा वै स्तोत्रियः प्राणा वालखिल्याः" इत्यादि ऐ० ब्रा० ३ भा० ३५१ पृ० । "अथ कस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवत इति"—इत्यादि च ३ भा० ३८२, २८८ पृ० । "तेषां तृचाः स्तोत्रियानुरूपाः शस्त्रादिषु सर्वेषु"—इति आश्व० श्रौ० ५. १०. १८ । आग्नेयौ = 'एह्यूषु', 'आग्निरगामि' ।

§ "समाप्तौ प्रणवेनावसानम्" इति, "त्र्यमन्त्र मोङ्कारं त्रिमात्रं कृत्वा"—इति च आश्व० श्रौ० १. २. १३, १० । ¶ ऋ० सं० ६. १६. १६, १७, १८ ।

( स्तोत्रियः * )

अग्ने त्वं नो अन्तमः ।

उत त्राता शिवो भवा वरूथ्योऽ३म् ॥

वसुरग्निर्वसुश्रवाः ।

अच्छा नक्षि द्युमत्तमं रयिं दाऽ३म् ॥

तन्त्वा शोचिष्ठ दीदिवः ।

सुम्नाय नूनमीमहे सखिभ्योऽ३म् † ॥

( स्तोत्रियः ‡ )

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।

एभिर्वर्द्धास इन्दुभिऽ३म् ॥

यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।

तत्रा सदः कृणवसोऽ३म् ॥

---

* षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य अग्ने त्व मिति द्वे, तं त्वा शोचिष्ठेत्येका। एवं मिलिता द्वैपदस्तृचः स्तोत्रियः। तथैव सूचित माश्वलायनेन—"मैत्रावरुणस्याग्ने त्वं नो अन्तमः अग्ने भव सुषमिधा समिद्ध इति स्तोत्रियानुरूपौ। अथ वालखिल्या विहरेत्"—इति ८. २, १।

† ऋ० मं० ५. २४. १, २, ४।

‡ एष च स्तोत्रियस्तृचः, अस्यानुरूपः आग्निरगामीति। तथाहि—"मैत्रावरुणस्य"—इत्यधिकृत्य, "एह्यू षु ब्रवाणि ते, आग्निरगामि भारतः"—इति आश्व० श्रौ० ७. ८, १।

नहि ते पूर्तमक्षिपद् भुवन्नेमानां वसो ।
अथा दुवो वनवसो३म् * ॥

( अनुरूपः † )

अग्निरगामि भारतो वृत्रहा पुरुचेतनः ।
दिवोदासस्य सत्पतो३म् ॥
स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना ।
वन्वन्नवातो अस्तृतो३म् ॥
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता ।
बृहत्ततन्थ भानुनो३म् ‡ ॥

( अनुरूपः § )

अग्ने भव सुषमिधा समिद्धः ।
उत बर्हिरुर्विया वि स्तृणीतो३म् ॥

---

* ऋ॰ सं॰ ६. १६. १६, १७, १८ ।

† "स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति" -इत्यादि ऐ॰ब्रा॰३ भा॰२३७पृ॰। पूर्वपृष्ठायाः ‡ टीप्पनी चात्र द्रष्टव्या ।

‡ ऋ॰ सं॰ ६. १६. १९, २०, २१ ।

§ पूर्वपृष्ठायाः * टीप्पनी द्रष्टव्या ।

उत द्वार उशतीर्वि श्रयन्ताम् ।
उत देवाꣳ उशत आ वहेहो३म् ॥
अग्ने वीहि हविषा यक्षि देवान् ।
स्वध्वरा कृणुहि जातवेदो३म् * ॥

( अनुरूपः † )

अग्निरगामि भारतो वृत्रहा पुरुचेतनः ।
दिवोदासस्य सत्पतो३म् ॥
स हि विश्वानि पार्थिवा रयिं दाशन्महित्वना ।
वन्वन्नवातो अस्तृतो३म् ॥
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता ।
बृहत्ततन्थ भानुना३म् ‡ ॥ §

( पुरस्ताद्याज्याः ¶ )

॥ अध्वर्यो शोꣳसावो३म् ॥

---

* ऋ० सं० ७. १७. १, २ ।

† तृतीय पृष्ठायाः ‡ टी[illegible]

‡ ऋ० सं० ६. १६ १६, ? [illegible] [ औ० ८. ९. ९।

§ "अत ऊर्ध्वं मधुच्छन्दोभ्यो वि[illegible] [illegible] शिल्पानि शंसेयुः"—इति आश्व०

¶ स्तोत्रियानुरूपेभ्यः प्रतिपदनुरूपेभ्यः प्रगाथेभ्यो धाय्याभ्य इति एष-

गाख्यानम्"—इति आश्व० श्रौ० ५. १०. १३

( पुनः प्रतिगरः )

॥ शंसा मोदैवो३म् ॥

( वालखिल्यानां पञ्चमो विहरणम् * )

अभि प्र वः सुराधस मिन्द्रस्य समिषो महीः ।
शतानीका हेतयो अस्य दुष्टरा इन्द्र मर्च यथा विदो३म्॥
यो जरितृभ्यो मघवा पुरूवसुर्यदीं सुता अमन्दिषुः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतो३म् ॥
इन्द्रो विश्वस्य गोपतो४म् † ॥ १ ‡

प्र सु श्रुतं सुराधसं हन्ति वृत्राणि दाशुषे ।
शतानीकेव प्र जिगाति धृष्णुयार्चा शक्र मभिष्टयो३म् ॥
यः सुन्वते स्तुवते काम्यं वसु दत्राणि पुरुभोजसम् ।
गिरेरिव प्र रसा अस्य पिन्विरे सहस्रेणेव मंहतो३म् ॥
इन्द्रो विश्वस्य भूपतो४म् ॥ २

---

* ऐ० ब्रा० ३ भा० ३४२ पृ० १२ पंक्तितो द्रष्टव्यम् ।

† ऐ० ब्रा० ३ भा० ३४५ पृ० १—१० पंक्तयो द्रष्टव्याः मैत्रपदा प्रगाथान्त स्वसाम मिति चतुर्मात्रः प्रणवः सर्वत्र । "चतुर्मात्रो ऽवसाने"—इति आश्व० श्रौ० १. २. १४ ।

‡ एष प्रगाथाङ्कः । वालखिल्यसूक्तानां प्रथमादिषु चतुर्षु सूक्तेषु ऋचो दश दश भवन्ति. ततः पञ्चमषष्ठयोरष्टावष्टाविति तासां सङ्कलनया षट्पञ्चाशद् । तेषां द्वयोर्द्वयोः प्रग्रथनेन अष्टाविंशतिः प्रगाथाः सम्पद्यन्ते ।

आ त्वा सुतास इन्दवो मध्वः क्षरन्ति धीतयः ।
अनेहसं वो हवमान मूतये मदाये इन्द्र गिर्वणोऽ३म् ॥
आपो न वज्रिन्नन्वोक्यं१सरः उप स्तोतेषु दधिरे ।
आ त्वा वसो हवमानास इन्दवः पृणन्ति शूरराधसोऽ३म् ॥
इन्द्रो विश्वस्य चेतनोऽ४म् ॥ ३

यद्वां सुतास इन्दवो मध्वः स्वादिष्ठ मीं पिब ।
अनेहसं प्रतरणं विवक्षण मभि प्रिय ममन्दिषोऽ३म् ॥
आपो न धायि सवनस्य आ वसो प्र नुद्रेव त्मना धृषत् ।
आ यथा मन्दसानः किरासि नो दुधा इवोप दाशुषोऽ३म् ॥
इन्द्रो विश्वस्य राजतोऽ४म् ॥ ४

आ नः स्तोम मुप द्रवद् विभूतिं राधसो महः ।
प्र वीर मुग्रं विविचिं धनस्पृतं
हियानो अश्वो न सोत्भोऽ३म् ॥
यन्ते स्वधावन्स्वदयन्ति धेनवः सदा पीपेथ दाशुषे ।
उद्रीव वज्रिन्नवतो वसुत्वनेन्द्र कण्वेषु रातयोऽ३म् ॥
इन्द्रो विश्वं विराजतोऽ४म् ॥ ५

आ नः सोमेध्वध्वरे विभूति मजिता वसुम् ।
उग्रं म वीरं नमसोपसेदि मेयासो अत्यो न तोशतोऽ३म् ॥

यं ते स्वदावन्स्वदन्ति गूर्त्तयः चरन्तीन्द्र धीतयः ।
उद्रीव वज्रिन्नवतो न सिञ्चते पौरे छन्दयसे हवो३म् ॥
प्र चेतन प्र चेतयो४म् * ॥ ६

यद्ध नूनं यद्वा यज्ञ ओजो वातस्य पिप्रति ।
रथिरासो हरयो ये ते अस्रिध यद्वा पृथिव्या मधो३म् ॥
ऋता नो यज्ञ माशुभिर्महे मते येभिः स्वः परीयसे ।
येभिर्निदक्षं मनुषो निघोषय उग्र उग्रेभिरागहो३म् ॥
इन्द्र द्युम्नाय न इषो४म् ॥ ७

यद्ध नूनं परावति वाता इव प्रसक्षिणः ।
अजिरासो हरयो ये त आशवो यद्वा पृथिव्यां दिवो३म् ॥
युजान इन्द्र हरिभिर्महे मते येभिर्विश्व स्वर्दृशे ।
येभिरपत्यं मनुषः परीयस ऋष्व ऋष्वेभिरा गहो३म् ॥
राये वाजाय वज्रिवो४म् ॥ ८

एतावतस्त ईमहे दीर्घनीथे दमूनसि ।
यथा कण्वे मघवन् मेधे अध्वर इन्द्र सुम्नस्य गोमतो३म् ॥

---

* ऐ० आ० ३ भा० ३८५ पृ० ११-२० पंक्त्यो द्रष्टव्याः। एतदादीनि पदानि त्वैतरेयकचतुर्थारण्यके श्रुतानि। "त्रयोविंशति महास्वरान् पादान् महानाम्नीभ्यः सपुरीषाभ्यः" —इति च आश्व० श्रौ० ८.२.२३।

यथा प्रावो मघवन् मेध्यातिथिं मयि गोषं हरिश्रियम् ।

यथा गोशर्ये असिषासो अद्रिवो

यथा नीपातिथिं धनो३म् ॥

शविष्ठ वज्रिन्नृञ्जसो४म् ॥ ९

एतावतस्ते वसो यथा पकथे दशव्रजे ।

यथा कण्वे मघवन् त्रसदस्यवि विद्याम शूर नव्यसो३म् ॥

यथा प्राव एतशं कृत्व्ये धन इन्द्र गोमद्धिरण्यवत् ।

यथा गोशर्ये असनोऋजिश्वनि यथा वशं दशव्रजो३म् ॥

मंहिष्ठ वज्रिन्नृञ्जसो४म् ॥ १०

यथा मनौ सांवरणाविन्द्र सुवाने अमन्दथाः ।

पृषध्रे मेध्ये मातरिश्वनि सोममिन्द्रापिबः सुतो३म् ॥

नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगावृश्रुनसि ।

यथा सोम दशशिप्रे दशोण्ये

पुष्टिगौ श्रुष्टिगौ सचो३म् ॥

चिकित्वो अभि नो नयो४म् ॥ ११

यथा मनौ विवस्वति शर्याणे त्रिशिरे सुतम् ।

पार्षद्वाणः प्रस्कण्वं समसादयत् सोमं शक्रापिबः सुतो३म् ॥

यथा त्रिते छन्द इन्द्र जुजोषसि त्वोतो दशवे वृकः ।

सहस्राण्यसिषासङ्गवा मृषिरायी मादयसी सचोऽ३म् ॥

इन्द्रो विदे तमु स्तुषोऽ४म् ॥ १२

य उक्थेभिर्न विन्धते वाजे वाजिञ्छतक्रतो ।

यस्य त्वमिन्द्र स्तोमेषु चाकनश्चिकित्व क्त्वा सचोदनोऽ३म् ॥

इन्द्रं तमच्छा वद नव्यस्या मती जुहूमसि श्रवस्यवः ।

तं त्वा वयं सुदुघामिव गोदुहो ऽविष्यन्तं न सोजसोऽ३म् ॥

तं मूतये हवामहोऽ४म् ॥ १३

य उक्था केवला दधे त्रिधातु मुत्तमे पदे ।

यस्मा अर्कं सप्तशीर्षाण मानृचु-

र्यः सोमं धृषिता पिबोऽ३म् ॥

यस्मै विष्णुस्त्रीणि पदा विचक्रम आदित्ज्जनिष्ट पौंस्यम् ।

स१त्विमा विश्वा भुवनानि चिक्रदद्रूप मिचस्य धर्मभोऽ३म् ॥

जेतार मपराजितोऽ४म् ॥ १४

यो नो दाता वसूनां स रायस्पोष मिन्वति ।

यस्मै त्वं वसो दानाय मंहस इन्द्रं तं हूमहे वयोऽ३म् ॥

विद्मा ह्यस्य सुमतिं नवीयसीं स्तोमैरिन्द्रं हवामहे ।

वसूयवो वसुपतिं शतक्रतुं गमेम गोमति व्रजोऽ३म् ॥

स नः पर्षदति द्विषोऽ४म् ॥ १५

यो नो दाता स नः पिता स रायस्पोषमश्नुते ।
यस्मै त्वं वसो दानाय शिक्षसि महाँ उग्र ईशानको३म्
अयामन्नुग्रो मघवा पुरूवसुः सुतावन्तो हवामहे ।
तं त्वा वयं मघवन्निन्द्र गिर्वणो गोरश्वस्य प्रदातु नो३म् ॥
क्रतुश्छन्द ऋतं बृहो४म् ॥ १६

कदा चन स्तरीरसि शिक्षो शिक्षसि दाशुषे ।
यस्मै त्वं मघवन्निन्द्र गिर्वणो नेन्द्र सश्चसि दाशुषो३म् ॥
उपोपेन्नु मघवन् भूय इन्नु, ते कण्वच्छृणुधी हवम् ।
अस्माकं गिर उत सुष्टुतिं वसो दानं देवस्य पृच्यतो३म् ॥
स नः पर्षदति स्रिधो४म् ॥ १७

कदा चन प्र युच्छसि वधैः शुष्णं निधापयन् ।
प्र यो ननक्षे अभ्योजसा क्रिविमुभे निपासि जन्मनो३म्
तुरीयादित्य हवनं त इन्द्रिय मादिज्ञ निष्ट पार्थिवः ।
यदेदस्तम्भीत् प्रथयन्नमूं दिव मा तस्थावमृतं दिवो३म् ॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८

यस्यायं विश्व आर्यः सं शोणी ममु मृर्यम् ।
स मिन्द्रो रायो बृहतीरधूनुत दामः शेवधिपा अरो३म् ॥
तिरश्चिदर्ये रुशमे पवीरवि सोमा इन्द्र ममन्दिषुः ।

आ नो विश्वेषां रस मध्वस्तु मद्य मिन्धत: ।
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु: सिन्धुस्त्वद्रयोऽ३म् ॥
ये परावति सुन्विरे जनेष्वा भ्राजातु पृथिवी हवम् ।
आपो वातः पर्वतासो वनस्पतिर्न्य अवांयतीन्द्रयोऽ३म् ॥
समन्येषु ब्रवावहोऽ४म् ॥ २३

आ नो विश्वे सजोषसो विश्वे मन्वन्त्वा वसु ।
विश्वा द्वेषांसि जहि चाव चा कृधि
देवासो गन्तनोप नोऽ३म् ॥
वसवो रुद्रा अवसे न आ गमन् यथा सोमस्य तृम्पसि ।
शोष्ठेषु चित्ते मदिरासो अंगवः शृण्वन्तु मरुतो हवोऽ३म्॥
शर्वो धा गोषु गच्छताऽ४म् ॥ २४

पूषो नेदीय एदिहि वाज आ वक्षि सुक्रतो ।
आजिपते नृपते त्वामिद्धि नो मितमेधाभिरूतिभोऽ३म् ॥
आ भत्स शन्तमाभिरभिष्टिभि समवांसो विश्वशिवरे ।
वीतीहोत्राभिरुत देववीतिभिरा त्वापे स्वापिभोऽ३म् ॥
सखा सुशेवो अद्वयोऽ४म ॥ २५

यदिन्द्र राधो अस्ति ते कृधि प्रजास्त्वा भगम् ।
आजितुरं सत्पतिं विश्वचर्षणिं भाघोन मघवत्तमोऽ३म् ॥

तेन नो बोधि सधमाद्यो वृधे क्रतुं पुनन्त आनुषक् ।
प्र सू तिरो शचीभिर्ये त उक्थिनो भगीदानायवृत्रहो३म्
एवा ह्येवैवा हि देवो४म् ॥ २६

अस्ते साधिष्ठोऽवसे त्व मस्माकं शतक्रतो ।
वयं त इन्द्र स्तोमेभिर्विधेम ते स्याम भरेषु तो३म् ॥
वयं होत्राभिरुत देवहूतिभिः प्रस्कण्वाय नि तोशय ।
महि स्थूरं शशयं राधो अह्रयं ससवांसो मनामहो३म् ॥
आयो मन्याय मन्यवो४म् ॥ २७

स्विं ह्य१र्यं आशिषं आजिं यामि सदोतिभिः ।
अयं हि ते हरिवो ब्रह्म वाजयुरिन्द्र आयुर्जनानो३म् ॥
अस्मान्त्सुन्वस्व मघवन्नुपावसे गव्युरग्रे मघोनाम् ।
त्वा मि देव तमसं सभश्वयुर्भुक्ष्व पिप्रुषी मिषो३म् ॥
उपो मन्याय मन्यवो४म् ॥ २८

( अथ वालखिल्याना मर्द्धर्चशो विहरणम् * )

अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे ।

---

* ऐ॰ ब्रा॰ ३भा॰ ३४४ ए॰ १५—२॰पङ्क्तयः, ३४६ए॰ १॰ ५पंक्तयश्च द्रष्टव्याः

गिरिर्न भुज्मा मघवत्सु पिन्वते
यदीं सुता अमन्दिषो३म् ॥
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म् ॥
इन्द्रो विश्वस्य गोपतो४म् ॥ १

प्र सु श्रुतं सुराधस मर्चा शक्र मभिष्टये ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म् ॥
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म् ॥
इन्द्रो विश्वस्य भूपतो४म् ॥ २

आ त्वा सुतास इन्दवो मदा ये इन्द्र गिर्वणः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
अनेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।
आपो नु वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसो३म् ॥
इन्द्रो विश्वस्य चेतनो४म् ॥ ३

यदीं सुतास इन्दवो ऽभि प्रिय ममन्दिषुः ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मनाधृषो३म् ॥
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठ मीं पिब ।

आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषो३म् ॥
इन्द्रो विश्वस्य राजतो४म् ॥ ४

आ नः स्तोम मुप द्रवद्धियानो अश्वो न सोतृभिः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म् ॥
प्र वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
यन्ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म् ॥
इन्द्रो विश्वं विराजतो४म् ॥ ५

आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म् ॥
उग्रं न वीरं नमसोप सेदिम विभूति मक्षिता वसुम् ।
यन्ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवो३म् ॥
प्र चेतन प्रचेतयो४म् ॥ ६

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि ।
येभिर्नि दस्यु मनुषो निघोषयो येभिः स्वः परीयसो३म् ।
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
अतो नो यज्ञ माशुभिर्महे-
मत उग्र उग्रेभिरा गहो३म् ॥
इन्द्र द्युम्नाय न इषो४म् ॥ ७

यच्च नूनं त्वा [illegible] पृथिव्यां दिवि ।
येभिः [illegible] [illegible] येभिर्विश्वं स्वर्दृशोऽ३म् ॥
भद्रिः [illegible] हरयो [illegible] भागेवो वाता इव प्रसक्षिणः ।
युञ्जान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरागहीऽ३म् ॥

राये वाजाय वज्रिवोऽ४म् ॥ ८

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धनेऽ३म् ॥
यथा कण्वं मघवन् [illegible] अध्वरे दीर्घनीथे दमूनसि ।

यथा प्रावो मघवन् मेध्यातिथिं

यथा नीपातिथिं धनेऽ३म् ॥

शविष्ठ [illegible] जुग्नुक्सोऽ४म् ॥ ९

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवोऽ३म् ॥
यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजेऽ३म् ॥

मंहिष्ठ वज्रिन्नृञ्जसेऽ४म् ॥ १०

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसोऽ३म् ॥

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म् ॥
चिकित्वो अभि नो नयो४म् ॥ ११

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
सहस्रावयसिषासङ्ख्या ऋषिस्त्वोतो दधवे वृको३म् ॥
पार्षद्वाणः प्रस्वण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म् ॥
इन्द्रो विदे तमु स्तुषो४म् ॥ १२

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म् ॥
यस्य त्वमिन्द्रस्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे३म् ॥
त ऊतये ह्वयामहो४म् ॥ १३

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
स त्विमा विश्वा भुवनानि चिक्रददादिज्जनिष्टपौंस्यो३म् ॥
यस्मा अर्कं सप्तशीर्षाण मानृचुस्त्रिधातु मुत्तमे पदे ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उपमित्रस्य धर्मभो३म् ॥
जेतार मपराजितो४म् ॥ १४

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
तुरीयादित्य हवनं त इन्द्रिय मा तस्थावमृतं दिवोऽ३म् ॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
सं शुक्रासः शुचयः सङ्गवा-
शिरः सोमा इन्द्रे मन्दिषोऽ३म् ॥
स मिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
निरश्विदर्य शुक्रमे पवीरवि तुभ्येत् भो अज्मते रयोऽ३म् ॥
सुम्न आ धेहि नो वसो४म् ॥ १९
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवोऽ३म् ॥
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
पूर्वीकृतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतोऽ३म् ॥
पूर्त्तिः शविष्ठ शस्यतो४म् ॥ २०
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
यथा संवर्त्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वोऽ३म् ॥
मघोन्त इन्द्र मवसे सुक्रत्यया येषां सुतेषु मन्दसे ॥
पुर्भित्तम मघवन्निन्द्र गोविद मीशानं राय ईमहोऽ३म् ॥

इन्द्र मेदीय एदिहि मितमेधाभिरूतिभिः।
वीती होत्राभिरुत देववीतिभिः ससवांसो विशृण्विरो३म॥
वाजिपते नृपते त्व मिद्धि नो वाज आ वक्षि सुक्रतो।
आ गन्त्रमशन्त्रमाभिरभिष्टिमिरा स्वापे स्वापिभो३म्॥
सखा सुशेवो अद्वयो४म्॥ २५
यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
प्र सू तिरा शचीभिर्ये त उक्थिनः
क्रतुं पुनत आनुषो३म्॥
वाजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्॥
एवा ह्यसि वीर युरेवा शूर उत स्थिरः ।
एवा ते राध्यं मनः॥
एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।
अधा चिदिन्द्र मे सचा॥
मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते ।
मत्स्वा सुतस्य गोमतः॥
एवा ह्येवेवा हि देवा४म्॥ २६
यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
महि स्तूर्न शश्यं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म्॥
वयं त इन्द्र स्तोमेभिर्विधेम त्व मस्माकं शतक्रतो ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म्॥
वायो मन्याय मन्यवो४म्॥ २७
सन्ति ह्य१र्य आशिष इन्द्र आयुर्जनानाम् ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनो३म्॥

अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः।
अस्मान्नवस्व मघवन्नुपावसे
धुक्षस्व पिप्युषी मिषो३म्॥
उपो मन्याय मन्यवो४म्॥ २८

( अथ वालखिल्यानां मर्डमंत्रो विवरणम् * )

अभि प्र वः सुराधस मिन्द्र मर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म्॥
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः।
गिरिर्न भुज्मा मघवत्सु पिन्वते
यदीं सुता अमन्दिषो३म्॥
इन्द्रो विश्वस्य गोपतो४म्॥ १

प्र सु श्रुतं सुराधस मर्चा शक्र मभिष्टये।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म्॥
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्॥
इन्द्रो विश्वस्य भूपतो४म्॥ २

* ऐ० आ० १भा० १४४ पृ० २१,०२पंक्ती द्रष्टव्ये; पुनः ८४४ पृ० ६,७,८ पंक्तयश्च।

आ त्वा सुतास इन्दवो मदा ये इन्द्र गिर्वणः ।
आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसो३म् ॥
अनेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
इन्द्रो विश्वस्य चेतनो४म् ॥ ३
यदी सुतास इन्दवो ऽभि प्रिय ममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघाइवोपदाशुषो३ः
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठ मीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मनाधृषो३म् ॥
इन्द्रो विश्वस्य राजतो४म् ॥ ४
आ नः स्तोम मुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म् ॥
प्र वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म् ॥
इन्द्रो विश्वं विराजतो३म् ॥ ५
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते
यं ते स्वदावन्स्वदन्ति गूर्तयः पौरे छन्दयसे हवो३म् ॥
उग्रं न वीरं नमसोप सेदिम विभूति मक्षितावसुम् ।

प्रविष्ट वज्रिन्नृज्ञसो४म् ॥ ९

एतावतस्त वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं क्रुत्व्ये धने यथा वशं दशव्रजो३म् ॥
यथा कण्वं मघवन् चसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवो३म् ॥
मण्हिष्ठ वज्रिन्नृज्ञसो४म् ॥ १०

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म् ॥
पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३म् ॥
चिकित्वो अभि नो नयो४म् ॥ ११

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म् ॥
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद्गवा मृषिस्त्वोतो दस्यवे वृको३म् ॥
इन्द्रो विद्रेत मु स्तुषो४म् ॥ १२

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसो३म् ॥

यस्य त्वमिन्द्रस्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३म् ॥
त मूतये हवामहो४म् ॥ १३

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्राम उपमित्रस्य धर्मभो३म् ॥
यस्मा अर्कं सप्तशीर्षाणं मानृचुस्त्रिधातु मुत्तमं पदं ।
स त्वि१मा विश्वा भुवनानि चिक्रददादिज्जनिष्टपौंस्यो३म् ॥
जेतार मपराजितो४म् ॥ १४ .

यो नो दाता वसूना मिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३म् ॥
यस्मै त्वं वसो दानाय मंहसे स रायस्पोष मिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥
स नः पर्वर्दतोदृशो४म् ॥ १५

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म् ।
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोष मश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहो३म् ॥
क्रतुश्छन्द ऋतं बृहो४म् ॥ १६

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३म् ॥
यच्चिद्धि त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म्॥
स नः पर्षदतिद्विषो४म् ॥ १७
कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३म्॥
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३म् ॥
पूर्वस्य यत्ते अद्रिवो४म् ॥ १८
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयो३म्॥
स मिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सङ्गवाशिरः
सोमा इन्द्र ममन्दिषो३म् ॥
सुम्न आ धेहि नो वसो४म् ॥ १९
असावि सोम पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म्॥

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवोऽ३म् ॥
पूर्त्तिः शचिष्ठ शस्यताऽ४म् ॥ २०

उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविद
मीशानं राय ईमहोऽ३म् ॥

नक्षन्त इन्द्र मवसे सुकृत्यया येषां सुतेषु मन्दसे ॥
यथा संवर्त्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वोऽ३म्
नूनं तं नव्यं सन्न्यसोऽ४म् ॥ २१

एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं
पौरासः नक्षन् धीतिभाऽ३म् ॥

य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
त्वं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहोऽ३म् ॥
प्र भो जनस्य वृत्रहोऽ४म् ॥ २२

आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवोऽ३म् ॥
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।

आपो वातः पर्वतासो वनस्पतिः
शृणोतु पृथिवी हवो३म् ॥
समन्येषु ब्रवावहो४म् ॥ २३

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आगमञ्छृण्वन्तु मरुतो हवो३म् ।
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसो३म्॥
शूरो यो गोषु गच्छतो४म् ॥ २४

इन्द्र मेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शन्तमशन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिर३म् ॥
आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।
वीती होत्राभिरुत देववीतिभिः ससवांसो विशृण्विरा३म्॥
सखा सुशेवो अद्वयो४म् ॥ २५

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्॥
आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः
क्रतुं पुनत आनुषो३म् ॥

एवा ह्येवा हि देवो४म् ॥ २६

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म् ॥
वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म् ॥

आ यो मन्याय मन्यवो४म् ॥ २७

भन्ति ह्य१र्य आशिष इन्द्र आयुर्जनानाम् ।
अस्मान्नक्षस्व मघवन्नुपावसे
धुक्षस्व पिप्युषीमिषो३म् ॥
अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तमसे समश्वयुर्गव्युरग्रे मथीनो३म् ॥

उपो मन्याय मन्यवो४म् ॥ २८

(अथ वालखिल्यानां यथापाठं शंसनम् *)

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म् ॥

---

* ऐ० ब्रा० ३भा० ३४७ पृ० १ पंक्तिः। [illegible]

अनानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्॥

आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः।
आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसो३म्॥

अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषो३म्॥

आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः।
यं ते स्वधावन्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्॥

उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम्।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म्॥

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्या मधि।
अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गह्यो३म्॥

अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म्॥

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः।
यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं धने३म्॥
यथा कण्वे मघवन्त्रसदस्यौ यथा पक्थे दशव्रजे।

…या गोअग्रं यमनोक्षं जिष्णवीन्द्र गोमद्धिरण्यवोऽ३म् ॥

… सु…तं सुराधस मर्चा शक्र मभिष्टये ।

यः …न्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतोऽ३म् ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।

गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषोऽ३म्

यदीं सुतास इन्दवोऽभि प्रिय ममन्दिषुः ।

…पो न धायि सवनं म आ वसो दुघा इवोप दाशुषोऽ३म्

अनेहसं वो हवमान मूतये मध्वः क्षरन्ति धीतयः ।

आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरोऽ३म्

आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।

यं ते स्वदावन्स्वदन्ति गूर्तयः पौरे छन्दयसे हवोऽ३म्

प्र वीर मुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।

उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषोऽ३म्

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।

युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहोऽ३म्

स्थिरासो हरयो ये त आस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३म् ॥

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३म् ॥

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३म् ॥

यथा मनौ सांवरणौ सोम मिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म् ॥

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रि मुद्धितम् ।
सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृको३म् ॥

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं त मच्छा वद नव्यस्या मत्यविष्यन्तं न भोजसो३म् ॥

यस्मा अर्कं सप्तशीर्षाणं मानृचुस्त्रिधातु मुत्तमे पदे ।
स त्वि१मा विश्वा भुवनानि चिक्र-
ददादिज्जनिष्टपौंस्यो३म् ॥

यो नो दाता वसूना मिन्द्रं तं हूमहे वयम् ।

विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजोऽ३म्

यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोष मश्नुते ।

तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहोऽ३म्

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।

उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यतोऽ३म् ॥

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।

यदेदस्तम्भीत्प्रथयन्नमूं दिव मादिज्जनिष्ट पार्थिवोऽ३म् ॥

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।

तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयोऽ३म्

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्क मानृचुः ।

अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवोऽ३म्

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।

यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचोऽ३म्

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।

यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३म् ॥

य उक्था केवला दधे यः सोमं धृषितापिबत् ।

यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभो३म्

यस्य त्व मिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।

तं त्वा वयं सुदुघा मिव गोदुहो जुहूमसि श्रवस्यवो३म्

यो नो दाता स नः पिता महाꣳ उग्र ईशानकृत् ।

अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३म्

यस्मै त्वं वसो दानाय मंहसे स रायस्पोष मिन्वति ।

वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३म् ॥

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।

तुरीयादित्य हवनं त इन्द्रिय मा तस्थावमृतं दिवो३म्

यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।

अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म्

अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।

पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म् ॥

समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।

सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषोऽ३म्

उपमं त्वा मघोनाञ्ज्येष्ठञ्च वृषभाणाम् ।

पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहोऽ३म्

य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।

तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहोऽ३म् ॥

आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।

ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवोऽ३म् ॥

विश्वा द्वेषांसि जहि चाव चा कृधि

विश्वे सन्वन्त्वा वसु ।

शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसोऽ३म्

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।

आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभोऽ३म ॥

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।

प्रसूतिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषोऽ३म्

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहोऽ३म् ॥
अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनोऽ३म् ॥
एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्जमावन्घृतश्चुतम्पौरासो नक्षन्धीतिभोऽ३म्
नक्षन्त इन्द्र मवसे सुकृत्यया येषां सुतेषु मन्दसे ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वोऽ३म् ॥
आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवोऽ३म्
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवोऽ३म्
यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहोऽ३म्
आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।

वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥

सन्ति ह्य१र्य आशिष इन्द्र आयुर्जनानाम् ।

अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषी मिषो३म् ॥

वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।

महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म्

प्रति ते दस्यवे वृक राधो अदर्श्यह्रयम् ।

द्यौर्न प्रथिना शवो३म् ॥

दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः ।

नित्याद्रायो अमंहतो३म् ॥

शतं मे गर्दभानां शत मूर्णावतीनाम् ।

शतं दासाँ अति स्रजो३म् ॥

तत्रो अपि प्राणीयत पूतक्रतायै व्यक्ता ।

अश्वाना मिन्न यूथ्यो३म् ॥

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।

अग्निः शुक्रेण शोचिषा बृहत्सूरो अरोचत

दिवि सूर्यो अरोचतो३म् ॥

भूरीदिन्द्रस्य वीर्य१ व्यख्य मभ्यायति ।

राधस्ते दस्यवे वृको३म् ॥

शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते ।

मह्ना दिवं न तस्तभो३म् ॥

शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि

शतं मे बल्वजस्तुका अरुषीणां चतुःशतो३म् ॥

सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः ।

अश्वासो न चङ्क्रमतो३म् ॥

आदित्साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।

श्यावीरतिध्वसन्पथश्चक्षुषा चन सन्नशो३म् ॥

इमानि वां भागधेयानि सिस्रत

इन्द्रावरुणा प्र महे सुतेषु वाम् ।

यज्ञेयज्ञे ह सवना भुरण्यथो

यत्सुन्वते यजमानाय शिक्षथो३म् ॥

निः षिध्वरीरोषधीराप आस्ता-

मिन्द्रावरुणा महिमान माशत ।

या सिस्रतू रजसः पारे अध्वनो

ययोः शत्रुर्नकिरादेव ओहतो३म् ॥

सत्यं तदिन्द्रावरुणा कृशस्य वां

मध्व ऊर्मिं दुहते सप्त वाणो३म् ।

ताभिर्दाश्वांस मवतं शुभस्पती

यो वा मदब्धो अभि पाति चित्तिभो३म् ॥

घृतप्रुषः सौम्या जीरदानवः

सप्त स्वसारः सदन आ ऋतस्य

या ह वा मिन्द्रावरुणा घृतश्चुत-

स्ताभिर्धत्तं यजमानाय शिक्षतो३म् ॥

अवोचाम महते सौभगाय

सत्यं त्वेषाभ्यां महिमान मिन्द्रियो३म् ।

यस्मान्नित्यन्द्रावरुणा घृतश्चुत-

स्तिस्रः साप्तेभिरवतं शुभस्पतोꣳम् ॥

इन्द्रावरुणा यदृषिभ्यो मनीषां

वाचो मतिं श्रुतमदत्तमग्रोꣳम् ।

यानि स्थानान्यसृजन्त धीरा

यज्ञं तन्वानास्तपसाभ्यपश्योꣳम् * ॥

[ पुनराह्वावः † ]

॥ शोंसावोꣳम् ॥

[ पञ्चो दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसोꣳम् ।

होता वेदिषदतिथिर्दुरोणसोꣳम् ॥

---

* अत्र स्तुतशस्त्रान्ता ऋक् दूरोहणान्ते प्रयुज्यते। तदनुपदं द्रष्टव्यम् ( ४५पृ० )।

† शिल्पशंसनानन्तरं दूरोहणशंसनं विहितम्। तदर्थोऽयं माह्वावः। "आहूय दूरोहणं रोहति"—इत्यादि ऐ० ब्रा० ६भा० ३५६पृ०, ३भा० ३४६पृ० च द्रष्टव्यम्।

नृषद् वरसहृतसद् व्योमसोऽ३म्।

अब्जा गोजा ऋतजा अद्रिजा ऋतोऽ३म्॥ १ *

[ अर्द्धर्चगो दूरोहणम् † ]

हंसः शुचिषद् वसुरन्तरिक्षस-

द्धोता वेदिषदतिथिर्दुरोणसोऽ३म्।

नृषद् वरसहृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतोऽ३म्॥ २

[ त्रिपद्या दूरोहणम् ]

सः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषोऽ३म्।

तिथिर्दुरोणसन्नृषद् वरसहृतसोऽ३म्।

सदब्जा गोजा ऋतजा अद्रिजा ऋतोऽ३म्॥ ३

[ ऋक्शोऽनवानं दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षस-

द्धोता वेदिषदतिथिर्दुरोणसत्।

---

* ऋ० सं० ४. ४०. ५।

† “समरूपा हंसवती दूरोहण मित्यारिणम्”– इति ऐ० आ० भा० भा० १भा० १४८पृ०, २भा० ३५६ पृ० च द्रष्टव्यम्।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥

[ पुनः त्रिपद्या दूरोहणम् ]

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषो३म् ।

अतिथिर्दुरोणसन् नृषद् वरसदृतसो३म् ।

व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ५

( पुनरर्धर्चशो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षस-

द्धोता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमस-

दब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ६

( पुनः पच्छो दूरोहणम् )

हंसः शुचिषद् वसुरन्तरिक्षसो३म् ।

होता वेदिषदतिथिर्दुरोणसो३म् ।

नृषद् वरसदृतसद् व्योमसो३म् ।

अब्जा गोजा ऋतजा अद्रिजा ऋतो३म् ॥ ७

[ ऐन्द्रावरुणी परिधानीया * ]

इन्द्रावरुणा सौमनस मदृप्तं

रायस्पोषं यजमानेषु धत्तो३म् ।

प्रजां पुष्टिं भूति मस्मासु धत्तं

दीर्घायुत्वाय प्र तिरतं न आयो३म् ॥ †

[ शस्त्रसूक्तम् ‡ ]

आ वां राजानावध्वरे ववृत्यां

हव्येभिरिन्द्रावरुणा नमोभो३म् ।

प्र वां घृताची बाह्वोर्दधाना

परि त्मना विषुरूपा जिगातो३म् ॥ १

---

* "अथेदं मैन्द्रावरुणं सूक्तं मैन्द्रावरुणी परिधानीया"- इति ऐ० आ० ३५६, ३५७पृ० ।

† वालखिल्यैकादशसूक्तस्यान्तिमा ऋगियम् । मं० ८. ५९. ७ ।

‡ "आ वां राजानाविति नित्यमैकाहिकम्" -इति च आश्व० श्रौ० सू० ८. २. १९ । तृतीयसवने मैत्रावरुणस्य शस्त्रसूक्तमिदम् । ऐ०, आ० १भा० ३५१पृ० २४ पं० तथाद्रष्टव्यादि, पुनः ३५६, ३५७ पृ० च द्रष्टव्यम् ।

युवो राष्ट्रं बृहदिन्वति द्यौ-
र्यौ सेतृभिररज्जुभिः सिनीथो३म् ।
परि नो हेळो वरुणस्य वृज्या
उरुं न इन्द्रः कृणवदु लोको३म् ॥ २

कृतं नो यज्ञं विदथेषु चारुं
कृतं ब्रह्माणि सूरिषु प्रशस्तो३म् ।
उपो रयिर्देवजूतो न एतु
प्र णः स्पार्हाभिरूतिभिस्तिरेतो३म्

अस्मे इन्द्रावरुणा विश्ववारं
रयिं धत्तं वसुमन्तं पुरुक्षो३म् ।
प्र य आदित्यो अनृता मिना-
त्यमिता शूरो दयते वसूनो३म् ॥ ४ *

* पञ्चर्चमिदं सूक्तमाम्नातम् (मं० ७, ८४); तत्र चतस्र इमाः; पञ्चमी तु परिधानीया ४७ पृ० द्रष्टव्यम् ।

[ परिधानीया * ]

इय मिन्द्रं वरुण मष्ट मे गीः

प्रावत्तोके तनये तूतुजानो३म् ।

सुरत्नासो देववीतिं गमेम

यूयं पात स्वस्तिभिः सदा नो३म् ॥

[ शस्त्रान्ते आहावः † ]

उक्थं वाचीन्द्राय देवेभ्यः ।

[ शस्त्रान्ते प्रतिगरः ‡ ]

॥ ओ३म् ॥

[ आगूः § ]

॥ ये३ यजामहे ॥

---

* "सूक्तान्तेर्होता परिदधदेति, अथ समाप्य एव तृतीयसवने होत्रकायां परिधानीया भवन्ति"—इति ऐ० ब्रा० ३भा० २४७, २५४, ३५३, ३५७ पृ० ।

† "उक्थं वाचीन्द्राय देवेभ्य इत्याह शस्त्रैकादश्याचरम्"—इति ऐ० ब्रा० २भा० ५२, ५४ पृ० ।

‡ "ओ मित्यध्वर्युरेकाचरम्"—इति ऐ० ब्रा० २भा० ५२, ५४ पृ० ।

§ "ये३ यजामह इत्यागूः"—इति, "आगूर्याज्यादिः"—इति च आश्व० श्रौ० सू० १. ५. ५, ४ ।

[ शस्त्रयाज्या * ]

इन्द्रावरुणा मधुमत्तमस्य

वृष्णः सोमस्य वृषणा वृषेथाम् ।

इदं वा मन्धः परिषिक्त मस्मे

आसद्यास्मिन् बर्हिषि मादयेथो३म् † ॥

[ वषट्कारः ‡ , अनुवषट्कारः § ]

॥ वौ३षट् । सोमस्याग्ने वीहि वौ३षट् ‖ ॥

॥ इति वालखिल्यं ¶ शस्त्रं समाप्तम् ॥

---

* शस्त्रान्ते प्रयोज्या याज्या । एषा याज्या ऐन्द्रावरुणी । ऐ० ब्रा० ३भा० ३५१ पृ० । "याज्यान्तानि च शस्त्राणि"—इति आश्व० श्रौ० ५.१०.२१ ।

† ऋ० सं० ६.६८.११ । "याज्यान्तञ्च प्लावयेत्"—इति आ० १.५.८ ।

‡ "वौषडिति वषट्कारः"—इति आश्व० श्रौ० १.५.१५ । एष एव वषट्कारः शस्त्रयाज्यान्ते पाठ्यः । "उच्चैस्तरां वषट्कारः"—इति, याज्यावषट्कारयोर्नैरन्तर्यविधिस्तु ऐ० ब्रा० २भा० [illegible], ३०पृ० द्रष्टव्यः ।

§ ऐ० ब्रा० १भा० २१, २२ । आश्व० श्रौ० ५.५.१९ द्रष्टव्यम् ।

‖ "वषट्कारोऽन्त्यः सर्वत्र"—इति, "तयोरादौ प्लावयेत्"—इति च आश्व० श्रौ० सू० १.५.७ ।

¶ अत्र प्रदर्शितो विहारो महावालभिन्नामकः ; अहरावपि,श्रुतौ चौक्तिनावितिं । तौ तु ऐ० ब्रा० ३भा० ३६५ पृ०—३७१ पृ० द्रष्टव्यौ ।

॥ अथ ॥

# ॥ ऐतरेयालोचनम् ॥

---

अथेहालोचयामः—(१) किमिदमैतरेयं नाम ?, (२) कोऽस्य प्रवक्ता ?, (३) कुत्रत्यः सः ?, (४) कः कालोऽस्य ?, (५) कीदृशान्यासन् तदानीन्तनाचारव्यवहारविज्ञानानि ?, (६) कस्याः शाखाया इदम् ?, (७) कोऽस्य विषयः ?, (८) किमु प्रयोजनमेतस्येत्यष्टौ ॥

(१)

अथ किमिदमैतरेयं नाम ? ब्राह्मणमिति ब्रूमः । किमु ब्राह्मणमिति ? अत्राह जैमिनिः—"शेषे ब्राह्मणशब्दः" इति (२. १. ३३.)। मन्त्रभागातिरिक्तो वेदभागो ब्राह्मणमिति तदर्थः। यद्यपि विचारेणेदं लक्षणं युक्ततममिति ऋग्भाष्यभूमिकादौ सायणादिभिरङ्गीकृतम्, न तथाप्ययं ब्राह्मणाय तादृशमिति मन्यामहे वयम्; एतल्लक्षणेन एव तत्स्वरूपाप्रतीतिर्ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तिदर्शनाच्च। अतोऽत्र "कर्मचोदना ब्राह्मणानि" इति (३५म०, आपस्तम्बलक्षणमेवेहाश्रयामहे। अपि च कर्मचोदनापरा मन्त्रा अपीति तल्लक्षणं सदोषमिति चेदत्र ब्रूमः,—पदार्थस्वरूपबोधानुपयुक्तनिर्दोषलक्षणतो वरं पदार्थस्वरूपबोधोपयुक्तं सदोषलक्षणमपीति। तत्त्वतो यथा यजुर्बहुलाया यजुःसंहिताया यजुर्वेदत्वं न दोषावहम्, तथैव कर्मचोदनाबहुलेऽस्मिन्नैतरेयादौ ब्राह्मणत्वमपीति। ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तयस्तु संक्षेपतो निरूपा-

लोचने "कोऽसौ वेदः ?"–इतिप्रकरणे प्रकाशिता एव। ततो दयानन्दस्वामिना च ऋग्भाष्यभूमिकायां तदेव स्फुट मेवावादि। तत्र हि वेदसञ्ज्ञाविचारोपसंहारे— "ब्रह्मेति ब्राह्मणानां नामास्ति। अत्र प्रमाणम्। 'ब्रह्म वै ब्राह्मणः क्षत्रं राजन्यः ( श० १३. १. )' –इति, 'समानार्थावेतौ ब्रह्मन्शब्दो ब्राह्मणशब्दश्च' इति व्याकरणमहाभाष्ये ( ५. १. १. )। चतुर्वेदविद्भिर्ब्रह्मभिर्ब्राह्मणैर्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि"- इति। इतः पूर्वं नूतमालकाख्यैतरेयस्य सम्पादनभूमिकायां डा० हग् महोदयेनापि ब्राह्मणशब्दनिर्वचनमेवमेव सूचितम्। अस्माकन्त्वत्राप्यस्ति किञ्चिद् वक्तव्यम्। तद्यथा— न हि 'ब्राह्मोऽजातौ' इति ( पा० ६. ४. १७१. ) सूत्रे जायति ब्रह्मन्शब्दाद् ग्रन्थपरो ब्राह्मणशब्दः सम्भाव्यते, अतो ब्राह्मणवाचिब्रह्मन्शब्दादेवेदं निष्पन्नं ब्राह्मणं पदम्, अपि त्वस्मन्मते ब्राह्मणशब्दादेव प्रोक्ताद्यर्थेऽणि स्वान्निष्पन्नं ब्राह्मण मिति।

तदेवं ब्राह्मणेन प्रोक्तं यागविध्यादिबोधकं वचनं ब्राह्मणम्, तादृशवचनानां समूहो ग्रन्थोऽपि ब्राह्मण मेव। वचनपरत्वादेवास्य ब्राह्मणशब्दस्य क्लीवत्वम्। अथवा अस्त्वेतद् ब्राह्मणपदं भाष्यपरम्। वेदार्थवित्तमेन ब्राह्मणेन प्रोक्तं यागविध्यनुस्यूतं मन्त्रभाष्य मेव ब्राह्मण मिति। ब्राह्मणस्य वेदत्व मुररीकुर्वतापि सायणाचार्येण स्वकण्ठरवेणैवास्य मन्त्रव्याख्यानरूपत्व माभाषि। तथाहि तैत्तिरीयसंहिताभाष्यभूमिकायाम्— "ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः"– इति। वस्तुतस्तु मन्त्राणां हि ब्राह्मणकालतोऽपि बहुपूर्वकालजत्वात् ब्राह्मणकाले तदर्थप्रत्ययसंशयः सम्भाव्य एवेति ब्राह्मणकाराणां

ब्राह्मणानां तदर्थकाशनाय तत्तात्पर्याख्यानाय च प्रवृत्तिः समुत्पन्ना, तत एवेमानि पैङ्ग्यकौषीतकैतरेयादीनि आदिवेद-भाष्याणि सम्पन्नानीति वक्तुं युज्यत एव। तदिदमस्माभिर्नि-रुक्तालोचने ( ड--डी ) "वस्तुतः"-इत्यादिना "वेदभाष्यरूपाणि ब्राह्मणानीति"-इत्यन्तेन च ब्राह्मणग्रन्थाना मादिवेदभाष्यरूपत्व-मेव सिद्धान्तितम्।

यद्यप्येवं तथापि ब्राह्मणग्रन्थेषु सर्वत्रैव प्रधानतो यागविषया एवोपलभ्यन्ते। तत्र यागेषु यागाङ्गद्रव्यदेवतामन्त्रादिषु प्रवृत्त्युत्पादनार्थाः स्तुत्यादयः स्तुत्यादिपरा आख्यायिकाश्च बह्व्य आख्याताः श्रूयन्ते। ता एव अर्थवादा उच्यन्ते। तदप्युक्त-मापस्तम्बेन— "ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च"-इति ( ३६, ३७ सू० )। तत्प्रसङ्गतो बहूनां मन्त्राणां मन्त्रांशानां वा प्रायोऽपि यज्ञपरव्याख्यानानि, क्वचिदन्यान्य-विधान्यपि समाम्नातानीति सर्वथा सैव सार्थवादब्राह्मणग्रन्थानां यागविधानार्थतैव परिफलति इति "कर्मचोदना ब्राह्मणानि"-इत्यापस्तम्बकृतं ब्राह्मणलक्षणं सङ्गच्छत एव सर्वमिति निरवद्यम्॥

अथोक्तमेवार्थं निदर्शनोदाहरणैः किञ्चिद् बोधयितुं यतामहे। प्रथमं तावदत्र दीक्षणीयेष्टिर्निरूपिता। सा खल्वग्निष्टोमादि-यागेषु दीक्षणार्था भवति। यागस्त्रिविधः; इष्टि-सोम-पशु-भेदात्। तत्रेयमिष्टिः प्रथमविधो यागः। अस्य देवताविधानमत्रैव समाम्नातम्— "अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"-इत्यादि ( ऐ० ब्रा० १. १. १. )। एतेनास्य यागस्य अग्निर्विष्णुश्च द्वे देवते इत्यवगम्येते। ततो द्रव्यविधानमत्रैव समाम्नातम्— "आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीय

मेकादशकपालम्"-इत्यादि। इत उत्तर मेतदीयावान्तरबहुविधविधानाद्यनन्तरं मन्त्रद्वयं विहितम्—"अग्निर्मुखं प्रथमो देवताना मग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः"-इत्यादि। अनयोर्मन्त्रयोः पूर्वो दीक्षायागप्रधानहविषः पूर्वोक्तस्य तस्य 'पुरोऽनुवाक्या' भवति, उत्तरो याज्येति विवेकः। तदेनयोः स्पष्टार्थतया, अविवक्षितविशेषतात्पर्यतया वा विशेषतो व्याख्यानमात्पर्यं नोक्तं ऽत्रैतरेयके ; अपि यद्देतदुपक्रमे "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"-इति देवद्वयस्तुतिराम्नाता, तदेवैतन्मन्त्रद्वयस्य सामान्यतस्तात्पर्यव्याख्यानं सम्पन्नम्। 'अग्नेः' पार्थिवस्यास्याव-मत्वम्, पृथिवीस्थत्वात् ; एवं 'विष्णोः' आदित्यस्योत्तमत्वम्, द्युस्थत्वात् ; अन्यासां वाय्वादीनां सर्वासा मेव देवताना मेतयो द्यावापृथिव्योरेव अन्तःस्थत्वात् एनयोर्ग्रहणेनैव ग्रहण मभीष्ट मित्याशयः। मन्त्रावेतौ ऋग्यजुस्सामाथर्वशाखीयसंहितास्विदानी-मुपलब्धासु न दृश्येते ; कृष्णयजुस्तैत्तिरीयब्राह्मणे तु श्रूयेते ( २. ४. १. ३. ४. ), परं तत्रापि सन्ति पाठभेदाः। आश्वलायन-श्रौतसूत्रेऽपि हि प्रपठ्य विहितावेताविति न त्वाश्वलायनशाखीया-वप्यभिगम्येते ; अत एतौ ततोऽप्यन्यशाखीयाविति ध्रुवम् ॥

सोमप्रवहणीना मन्त्रान्तु विधान मनु व्याख्यानानि वाम्नातानि। तद्यथा—"भद्रादभि श्रेयः प्रेहीत्यन्वाह, अयं वाव लोको भद्रस्तस्मादसावेव लोकः श्रेयान्, स्वर्ग मेव तं लोकं गमयति। बृहस्पतिः पुर एता ते अस्त्विति, ब्रह्म वै बृहस्पति-र्ब्रह्मणा एनत् पुरोगव अकर्, न वै ब्रह्मण्वद्रिष्यति। अथेमवस्य वर आ पृथिव्या इति, देवयजनं वै वरं पृथिव्यै, देवयजन एवैनं

तदवसाययति । आरे शत्रून् कृणुहि सर्ववीर इति, द्विषन्तमेवास्मै तत् पाप्मानं भ्रातृव्यमपबाधतेऽधरं पादयति"-इति प्रथमर्चो विधिव्याख्याने (ऐ० ब्रा० १. ३. २.)। एषापि प्रचलिताया ऋक्शाखायां नाम्नातेत्यन्यशाखीयैव ; तैत्तिरीयसंहितायां तु श्रूयते १. २. ३. १८ ॥

ब्राह्मणविषयाणां विशेषतोऽर्थप्रतिपत्तये अन्यत्राप्यथा चोदाहरामः। श्रूयते हि शुक्लयजुर्वेदस्य माध्यन्दिन्याः शाखाया आदिमैषा कण्डिका— "इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे"-इति। शतपथब्राह्मणेऽस्या मन्त्रत्रयात्मिकात्वं स्वीकृत्य, प्रथममन्त्रस्य पर्णशाखाच्छेदने, द्वितीयस्य तयैव शाखया ताडनेन गवां वत्सानाञ्चैकीकरणे, अन्तिमस्य तृतीयस्य तु तयैव तथैव ताडनेन एकस्या गोर्वत्सतः पृथक्करणे विनियोगो विहितो व्याख्यातास्च ते त्रय एव मन्त्राः। तद्यथा— "स आच्छिनत्ति— 'इषे त्वोर्जे त्वेति। इष्यै तदाह, यदाहेषे त्वोर्जे त्वेति; यो वृष्टादूर्ग्रसो जायते तस्मै तदाह। अथ मातृभिर्वत्सान्त्समवासृजन्ति, स वत्सं शाखयोपस्पृशति— 'वायव स्थेति। अयं वै वायुर्योऽयं पवते; एष वा इदं सर्वं प्रप्याययति यदिदं किञ्च; वर्षत्येष वा एतासां प्रप्याययिता; तस्मादाह वायव स्थेति। ०—० अथ मातृणामेकां शाखयोपस्पृशति वत्सेन व्याकृत्य— 'देवो वः सविता प्रार्पयत्विति। सविता वै देवानां प्रसविता, सवितृप्रसूता यज्ञं सम्भरानिति; तस्मादाह देवो वः सविता प्रार्पयत्विति। 'श्रेष्ठतमाय कर्मण इति। यज्ञो वै श्रेष्ठतमं कर्म, यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मण इति"-इति माध्य० शत० ब्रा० १. ५. ४. १-५।

तत्रैव मस्या मन्त्रत्रयात्मिकायाः शुक्लयजुःप्रथमकण्डिकायाः सविनियोग एषोऽर्थः सम्पन्नः—

(१) 'इषे त्वा, ऊर्जे त्वा' इत्थं त्वां ; छिनद्मीति शेषः।

(२) 'वायवः स्थ' पवमानाः, वर्षणेन प्रप्यायमानाः यूयं स्थ ; युष्मान् समवसृजन् शाखयोपस्पृशामीति शेषः।

(३) 'सविता' देवानां प्रसविता 'देवः', 'वः' युष्मान्, यज्ञं सम्भरान्, पवमानान् 'श्रेष्ठतमाय कर्मणे' यज्ञाय 'प्रार्पयतु' ; सवितृप्रसूता वयमिदं यास्यामह इति शेषः।

नूनमेषोऽर्थोऽधियज्ञः, परं मन्त्रपदव्याख्यानेनाधिदैवतोऽर्थोऽपि सम्पद्यत एव। तद्यथा— "अयं वै वायुर्योऽयं पवते"। 'यः अयं पवते' सदैव पवमानो विद्यते, स एव 'अयं' त्वगिन्द्रियप्रत्यक्षः, अत एव विषयादिशून्यो भौतिको 'वायुः'। "एष वै इदं सर्वं प्रप्याययति यदिदं किञ्च"। 'यत् इदं किञ्च' स्थावरजङ्गमात्मकं जगत्, तत् 'इदं सर्वं' 'एषः वै' वायुरेव 'प्रप्याययति' प्रकर्षेण वर्द्धयति। "एष वै वर्षति" वायुरेव वृष्टिधाराः सर्वाः मेघतश्चालयन् पृथिव्यां संवाह्य प्याययति। अत एव "एतासाम्" पार्थिवीनामपां "प्रप्याययिता" वर्द्धयिता भवति। तत एवम्भूतं 'त्वा' त्वां वायुं "इषे" जानामि। "वृष्टात् ऊर्क् रसः जायते"। "ऊर्जे" ऊर्जे रसाय, तत एवान्नमुत्पद्यत इति 'इषे' अन्नाय च 'त्वा' त्वां जानामि। "देवानां" सर्वेषां मन्त्रादीनां "प्रसविता" सूर्यः ईश्वरो वा 'वः' "यज्ञं सम्भरान्" प्राणनहेतून् युष्मान् 'श्रेष्ठतमाय कर्मणे' "यज्ञाय" प्राणनकार्यनिर्वाहाय 'प्रार्पयतु' सदैव प्रार्पयत्येव, वयमपि "सवितृ-प्रसूताः" एव, अस्मानिति शेषः॥ एतेन वायोः प्रत्यक्षत्वम्, वर्षहेतुत्वम्,

वृष्टिद्वारा चान्नहेतुत्वम्, तत आप्यायनहेतुत्वम्; सूर्यप्रसूतत्वम्, प्राणनरूपश्रेष्ठकर्मकारित्वमित्येवमाख्यातं वायुविज्ञानम्। प्रधानतो वायुविज्ञानार्थ एव चाम्नातो यजुर्वेदः। अत एवैतदुक्तम्— "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्"— इत्येवमादिकमिति॥

श्रूयते चात्र पर्णशाखयैव वत्सापाकरणकार्याभिधानार्थी क्षुद्रतमैकाख्यायिका। तद्यथा— "यत्र वै गायत्री सोममच्छापतत्, तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद। गायत्र्यै वा सोमस्य वा राज्ञस्तत् पतित्वा पर्णोऽभवत्। तस्मात् पर्णो नाम। तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति। तस्मात् पर्णशाखया वत्सानपाकरोति" इति (शत० ब्रा० १.५.४.)। अस्यार्थः— 'यत्र' यस्मिन् काले हि 'गन्धर्वनगरे' हिमालयस्य अस्मिंश्चित् सुरम्यशिखरे 'सोमं' सोमवल्लीरूपम् 'अच्छ' आसु 'गायत्री' काचिद् गायिका 'अपतत्' गतवती; 'तत्' तदैव 'आहरन्त्याः' सोमवल्लीहरणं कुर्वन्त्याः 'अस्याः' 'अपादस्ताभ्यायत्य' 'अवस्ता'—अवस्तात्— अधस्तात् 'अभ्यायत्य' विमुच्य स्थितं 'पर्णं' पर्णाकारमेव पर्णवीत्रं 'चिच्छेद', सा गायत्रीति शेषः। 'गायत्र्यै' गायत्र्याः तस्या 'वा' अथवा 'सोमस्य' राज्ञः' अङ्गसंलग्नमागतं 'तत्' छिन्नं पर्णं 'पतित्वा' भूमिं गत्वा 'पर्णः' पर्णापरपर्यायः पलाशो वृक्षः 'अभवत्'। यतः पर्णेन पलाशोत्पत्तिः, तस्मात् 'पर्णो नाम' पर्ण इत्येवैष वृक्षः प्रसिद्धः। 'तत्' तस्मात् 'अत्र' 'सोमस्य' सारभूते रसे 'यदेव' 'न्यक्तं' वीर्यम्, 'तत्' इहापि पलाशवृक्षेऽपि 'असत्' अस्तीति।

एतदाख्यायिकातः पञ्च पर्णविज्ञानानि प्रतीतानि भवन्ति। पुरा सासीदिह गन्धर्वनगरेषु पलाशवृक्षो हिमवतः पश्चादिशानीक

इति प्रथमम्। बहुषु पलाशारण्येषु च प्राप्यते सोम इति द्वितीयम्। पलाशस्य फलानि न जायन्ते, अपि पत्राकाराण्येव तद्बीजानि भवन्तीत्यपि पत्रत एवास्योत्पत्तिर्भवतीति तृतीयम्। अत एव पत्रपर्यायशब्दाभिधेयः स पर्ण इति वा पलाश इति वाख्यायत इति चतुर्थम्। पत्ररसस्यापि सोमरसतुल्यबलकारित्व मिति पञ्चमम्॥ गन्धर्वाणां गानप्रियत्वं स्त्रीकामत्वं च संलक्ष्य, तत्र गन्धर्वसमर्गे सोमानयनाय गायिकायाः प्रेरणं चात्रैव शतपथे ऽन्यत्र च श्रुतम् ( ३का. २प्र. २क. ), तत्सर्वं तत्रैव द्रष्टव्य मिति॥

अथ दर्शयामः कस्मिंश्चित सूक्ते विधातव्येऽप्याख्यायिकाख्यातेति। तद्यथा—"तार्क्ष्यं स्वर्गकामस्य रोहेत्" इति ( ऐ० ब्रा० ४. ३. ६. )। तार्क्ष्यदेवताकं तृचं सूक्तं तार्क्ष्यम् ( ऋ० सं० १०. १७८. १-३. ), तस्मिन् 'तार्क्ष्ये' सूक्ते; तेन सूक्तशंसनेनेति भावः। 'स्वर्गकामस्य' यजमानस्य, प्रसङ्गागतं 'दूरोहणं' स्वर्गं 'रोहेत्', रोहण मारोहणं तत्सम्पादयेत्; शंसनकर्त्ता स्वर्गोति शेषः। इम मेव विधिं प्रस्तोतु माख्यातेषा स्वल्पाख्यायिका—"तार्क्ष्यो ह वा एतं पूर्वोऽध्वान मैत्, यत्रादो गायत्री सुपर्णो भूत्वा सोम माहरत्; तद्यथा चेतस मध्वनः पुर एतारं कुर्वीत, तादृक् तत्"—इति। 'तार्क्ष्यः' तन्नामा कश्चित् 'वै' एव 'पूर्वः' अग्रगामी सन् 'एत मध्वानं' पार्वत्यमार्गम् 'ऐत्' आगमत्, दर्शयत्रिवेति यावद्। कदा किमर्थ मित्याह— 'यत्र' यत्काले 'अदः' वृत्तान्तं सम्पन्नम्। किमित्युच्यते— 'गायत्री' देवगणप्रेरिता, गानेन गन्धर्वान् मोहयित्वा सोमानयने प्रवृत्ता, काचिद् गायिका नारी, 'सुपर्णः' पक्षी, तद्वत् ( लुप्तोपमान मिदं पदम् ), स यथा तीव्रदृष्टिर्द्रुतगामी [illegible] सन् स्वलक्ष्ये

उत्पतिष्णुर्भवति, तथा 'भूत्वा', 'सोमम्' 'आहरत्' आहृतवती, 'तत्' तदानीं 'यथा' 'अध्वनः क्षेत्रज्ञं' मार्गविशेषाभिज्ञं तद्देशवासिनं कञ्चिज्जनं 'पुर एतारं' पथप्रदर्शनायाग्रगामिनं 'कुर्वीत', 'तादृक्' 'तत्' तार्क्ष्यमासनं, दूरोहणारोहणाय भवतीति शेषः । कथमसौ तत्र तादृशविजनप्रदेशे पुरुषस्तार्क्ष्य इत्याह — "अयं वै तार्क्ष्यो योऽयं पवते"—इति । 'तार्क्ष्यः' खलु 'अयं' प्रत्यक्षगम्यः । कः ? 'योऽयं पवते' त्वाचप्रत्यक्षो यः सदैव सर्वत्र प्रवहति । एवञ्च वायोरेव नामान्तरं तार्क्ष्य इत्युक्तं सम्पन्नम् । स एष वायुरेव तत्र गायत्र्याः पथप्रदर्शको बभूवेति । तत्पथप्रदर्शकत्वञ्च वायोर्गन्धवहत्वेनोपपद्यत एव ; अस्या एव दिशः सोमगन्ध आयातीति समनुभूय तत्प्रदेशं गतवती सेति भावः । एतेनापि किञ्चिद् वायुविज्ञानमावेदितम्, विशेषतोऽभिज्ञानाय च ततः श्रुतम्— "एष स्वर्गस्य लोकस्याभिवोढा"—इति । 'एषः' तार्क्ष्यापरपर्यायो वायुः 'स्वर्गस्य लोकस्य अभिवोढा' मृतानां सुकृतीनां जन्तूनामातिवाहिकान् देहान् स्वर्गं लोकम् अभिवहति । किञ्च स्वरित्यादित्यपर्यायशब्दो निघण्टौ (१. ४. १.) पठितः, व्याख्यातश्च तथा निरुक्तेऽपि (२. ४. २.), ततश्चादित्यरश्मीनामिह पृथिव्या अभिवाहकत्वेन चास्य तार्क्ष्यस्य सम्पद्यते स्वर्गलोकवोढृत्वम् । तदेवमिह सूर्यरश्मीनां वाहक एषः, अमृतानि वाहिकसूक्ष्मदेहवाहकश्चैष एव ; तदिदं महाविज्ञानद्वयमेतदाख्यायिकयोपदिष्टमिति ध्येयम् ॥

एवमादिभ्य आख्यायिकाभ्यो बहव उपदेशाय लभ्यन्ते ; तत एव एवंविधा बह्वः कथा अनतिप्राचीनपुराणेषु तथाविधेतिहासादिषु च अल्पमतीनां स्त्रीशूद्रद्विजबन्धूनां धर्मोपदेशाय

कल्पिता भगवता व्यासेन, तदनुगामिभिश्चानेकैः क्रमादद्यतनैरपि। अत एवोक्तं महाभारतोपक्रमे— "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"-इति ( १. १. २६७. )। वस्तुतस्तु सर्वपुराणेतिहासमूलीभूतो वैदिकाख्यायिकोक्तो वृत्तान्तभागस्तु सर्व एवोपमानादिमूलकः परिकल्पितोऽसत्य इत्येव सिद्धान्तितं मीमांसादर्शने। तथाहि "गुणवादस्तु"-इतिसूत्रव्याख्यानावसरेऽभाष्येवं स्फुटं श्रीमदाचार्येण शबरस्वामिना— "अथ वृत्तान्तान्वाख्यानम्; स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। वृत्तान्वाख्याने वर्त्तमाने द्वयं निष्पद्यते,— यच्च वृत्तान्तज्ञानम्, यश्च कस्मिंश्चित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं न निवर्त्तकञ्चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम्; प्ररोचनया तु प्रवर्त्तते द्वेषान्निवर्त्तत इति तयोर्विवक्षा" इति ( १. २. १० सू० )। प्रदर्शितानि चैतदुदाहरणानि बहूनि तत्रैव किञ्चिदुदाहरणम्, त[illegible]मिदं "सः ( प्रजापतिः ) आत्मनो वपामुदखिदत् ( तै० [illegible] १. १. )"—इत्याद्याख्यायिकायाः प्रकृताभिप्रायव्याख्यान[illegible]म् "कथम्पुनरिदं निरालम्बनं मन्त्राख्यायते ? इति। उच्यते [illegible] कश्चिदर्थः प्रजापतिः स्यात्— वायुः, आकाशः, आदित्यो वा। 'स आत्मनो वपामुदखिदत्'-इति,— वृष्टिं, वायुं, रश्मिं वा। '[illegible] अग्नौ प्रागृह्णात्'-इति,— वैद्युते, आर्चिषे, लौकिके वा। 'ततोऽजः' -इति,— अन्नं, बीजं, वीरुहा। 'त मालभ्य ( त मुपजीव्य ) प्रजाः पशूनाप्नोति'-इति गौणाः शब्दाः"-इति। तदेवं छिन्नेषु मूलेषु कुतो न पतेयुः पौराणिकेतिहासाद्भुतकथाः सर्वा वातेन कदलीवनानि यथेति, को वा विश्वसिति बालोपदेशाय विष्णुशर्मादिभिर्निर्मिता काकोलूकसंवादादिकथा अवास्तवा अपीति सुधीभिरेवाकलय्य

मिद मिति । पौराणिकसूर्यचन्द्रसृष्ट्यादिविज्ञानानि तु सर्वाण्येव वेदविरुद्धान्येवेति वेद्यं वेदविद्भिः स्वत एव स्फुटम् ।

तदेवं ब्राह्मणग्रन्थेषु यागा विहिताः, तत्सिद्ध्यर्था द्रव्यदेवतामन्त्राश्च विहिताः, तत्र सर्वत्र प्रशस्त्यर्थं किञ्चिद्विज्ञानाद्युपदेशका अपि गौणमूलाः कल्पनासम्भृता आख्यायिकाश्च बह्व्य आम्नाताः, तत्तन्मन्त्राणां तत्तद्यागानुपयोगित्वं वर्णयितुं समासतस्तात्पर्यमन्वाख्यातुं वा व्याख्यानानि च कृतानि । ततश्च विध्यर्थवादाख्यानपूर्वक मादिमं मन्त्रभाष्यं ब्राह्मण मित्येव पर्यवस्यति ब्राह्मणलक्षणम् । अस्ति चात्र ग्रन्थे तल्लक्षणं समन्तादितीद मपि ब्राह्मणम्, नाम्ना चैतदैतरेयक मिति सिद्धम् ॥

( २ )

अथातो विचार्य मस्ति कोऽस्य प्रवक्तेति ; महिदास इति ब्रूमः । तथा ह्यारण्यकम्— "एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः" इति ( ऐ० आ० १, ८, २, ) । छन्दोगब्राह्मणेऽप्येव मेव ( ५. १६, ७, ) । तत्र "महिदासो नामतः, इतराया अपत्य मैतरेयः"-इति शाङ्करं भाष्यम् । अन्यच्च भाष्यभूमिकायामालेखि सायणेनैवम्— "प्रकृतस्य तु ब्राह्मणस्यैतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते । 'कस्य चित् खलु महर्षेः बह्व्यः पत्न्यो विद्यन्ते स्म । तासां मध्ये कस्याश्चिदितरेति नामधेयम् । तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः । तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयो न तु महिदासे । ततः कस्याश्चिद् यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापया-

मास। तदानीं खिन्नवदनं महिदास मवगत्येतराख्या तन्माता स्वकीयकुलदेवतां भूमि मभिसस्मार। सा च भूमिदेवता दिव्य-मूर्त्तिधरा सती यज्ञसभाया मागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैन मुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्य मगमय्यैतद्ब्राह्मणप्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महिदासस्य मनसः 'अग्निर्वै देवाना मवमः (ऐ० ब्रा० १. १. १.)'-इत्यादिकं 'स्तृणुते (ऐ० ब्रा० ८. ५. ५.)'-इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्द्ध्वम् 'अथ महाव्रतम् (ऐ० आ० १. १. १.)'-इत्यादिकम् 'आचार्याः (ऐ० आ० २. ६. ८.)'-इत्यन्त मारण्यकव्रतरूपं च ब्राह्मण माविरभूत्'-इति"-इति। तथा चेतराशब्दात् "शुभ्रादिभ्यश्च (पा० ४. १. १२३.)"-इत्यपत्यार्थे ढकि सम्पाद्य मिदं रूप मैतरेय इति॥

अत्र केचिदनुमीयते, सोऽय मैतरेयः स्याद् दासीपुत्रः, अस्ति हि ब्राह्मणस्य ब्राह्मण-क्षत्रिय-वैश्येति त्रिविधार्याणां तदितरस्य शूद्रस्यानार्यस्य च कन्यापरिणयेऽधिकारः; तथा क्षत्रियस्यापि क्षत्रिय-वैश्येति द्विविधयोरार्ययोः तदितरस्य शूद्रस्य चानार्यस्य कन्याग्रहणेऽधिकारः; एवं वैश्यस्यापि स्वजातीयाया आर्यायास्तदितराया अनार्यायाश्च कन्या-विवाहेऽधिकारः। तत्र सर्वेषा मेवार्यवर्णानां प्रथमं स्वजातीया-पाणिपीडन मेव विहितम्। किञ्च आर्यकन्याना मेवोद्वाहे यथाविधि वैदिकमन्त्रादीनां व्यवहारः समुचितः, तत एव हि तेषां पत्नीत्वम्; अत एवोक्तं भगवता महामुनिना पाणिनिनापि "पत्युर्नो यज्ञसंयोगे"-इति (४. १. ३३.); इतरायास्त्वमन्त्रकं ग्रहणमात्रम् अपि भरणीयत्वहेतुकं भार्यात्व मिति विवेकः॥

एतच्च सर्वं भृगुप्रोक्तमनुसंहितादौ सुव्यक्तं विहितम्। तथाहि—

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः॥
शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृता।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः"-इति (३.)।

तथैवान्यत्र—"विप्रस्य त्रिषु वर्णेषु, नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे चैकस्मिन्, षडेतेऽपसदाः स्मृताः"-इति (१०.)।

"वर्णत्रयाणामिति षट् पुत्राः सवर्णापुत्रकार्यापेक्षया 'अपसदाः' निकृष्टाः" इति तत्र कुल्लूकः। एषामपसदत्वेऽपि द्विजत्वं न व्याहतम्। तत्र तत्रैव—(१०. ४१.)

"सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः"-इति।

"षट् पुत्राः द्विजधर्मिणः उपनेयाः"-इति च तत्र कुल्लूकः। पुनस्तत्रस्तत्रैव—"यस्माद् बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद् बीजं प्रशस्यते"-इति (१०.७२.)।

यदुक्तं "न ब्राह्मणक्षत्रिययोः ०-- ० शूद्रा भार्योपदिश्यते"-इत्यादिषट्श्लोक्या, तत्तु सवर्णानीतसवर्णापरम्, सवर्णाग्रे द्विजातीनामिति श्लोकेऽग्रपदस्वारस्यात्, अन्यथा पूर्वापरग्रन्थावरोधस्यापरिहार्यत्वात्, कुल्लूकभट्टेन तत्र तथैव व्याख्यातत्वाच्च। न चान्यथा धीवरीगर्भजस्य वेदव्यासस्य विप्रत्वमुपपद्यते, नापि "नाग्निं चित्वा रामामुपेयात्"-इति (तै० स० ५. ६. ८. ६.) निषेध-श्रुतिः सङ्गच्छते। तैत्तिरीयारण्यकेऽपि "संवत्सरं न मांसमश्नीयात्, न रामामुपेयात्, न मृन्मयेन पिबेत्, नास्य राम उच्छिष्टं पिबेत्, तेज एव तत् संश्यति"-इति (५. ८. ४६.)। एवमादौ 'रामा'-शब्दः शूद्रापरः; सर्वत्र तथैव व्याख्यातत्वात्। विशिष्यतोऽत्र नैरुक्तं द्रष्टव्यम्।

तथाहि— "रामा रमणायोपेयते, न धर्माय; कृष्णजातीया"—इति (१२. २. २.)। "रामा-इति शूद्रोच्यते"—इत्यादिस्तदीया दौर्गी वृत्तिश्चेह द्रष्टव्या। तदेवं सवर्णायाः पाणिपीडनानन्तर मसवर्णाना ग्रहणे न कोऽपि दोष इति सिद्धान्तः। अत एव "इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम"—इत्यैतरेयश्रुतेर्व्याख्यानावसरे सायण आह— "राज्ञां हि त्रिविधाः स्त्रियः। तत्रोत्तमजातिर्महिषीति नाम, मध्यमजातिर्वावातेति, अधमजातेः परिवृक्तिरिति"—इति (३. २. ११.)। श्रुताश्चैतास्तैत्तिरीयेऽप्यश्वमेधकरणे (ब्रा० ३. ८. ४. ५.)। शतपथे तु "चतस्रो जाया उपक्लृप्ता भवन्ति, —महिषी, वावाता, परिवृक्ता, पालागली" इति (१२. ५. १. ८.) श्रुतम्॥

तदेव मेतद्ब्राह्मणप्रवक्तुरैतरेयनामव्युत्पत्तित एवेतरागर्भसम्भूतत्वसिद्धेः सायणाचार्यीयप्रवादप्रथितयज्ञसभार्त्तिपातित्वानुमानतश्च सिध्यत्येव दासीपुत्रत्वम्। तत एव महिदास इति दासान्त मभिधान मपि विश्रुतम्; तथा विद्वानित्येव विशेषणम्, न तु ऋषिरित्याचार्य इति वेति।

नन्वेव मार्याणा मार्यत्वप्रतिपादकाना मार्यधर्माणां यागादीनां विधायकस्यैतस्य ब्राह्मणग्रन्थस्य प्रवचनकर्तृत्वं कथ मनार्ये तत्र दासीपुत्रे सम्भवेन्नामेति चेत्, अत्र ब्रूमः। यागादिविधायक-ब्राह्मणग्रन्थस्य प्रोक्तृत्वं तु किं तुच्छम्, मन्त्रद्रष्टृत्व मपि श्रूयते दासीपुत्रस्यापीति। तद्यथा श्रुतं तावदत्रैव कवषैलूषोपाख्यानम्— "ऋषयो वै सरस्वत्यां सत्र मासत। ते कवष मैलूषं सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं

मा पादिति । स बहिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीय मपश्यत्"–इत्यादि (२. ३. १.) । तदपोनप्त्रीयं सूक्तन्तु दाशतय्यां दशमे त्रिंशं द्रष्टव्यम् ॥

तत्त्वतस्तु पुरा खल्वार्यावर्ते ये नगरवासिनः सभ्यास्तेषा मार्यत्वम्, ये त्वविद्यावीतरागा अप्यरण्याश्रिता गिरिकन्दरादिवासिनो ऽसभ्यास्तेषा मनार्यत्व मित्येव जातिद्वयं पार्थक्येन वर्णनीय मासी ज्जन्मस्थानव्यवहारादिभेदतः । तथा ह्याथर्वणिकाः किल तज्जातिद्वय मवलम्ब्यैव माम्नायन्ते (१९. १. ८. १.)—

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत, — उत शूद्र उतार्ये"–इति ।

अहो प्रशस्तोऽयं तदानीन्तनः सार्वजनीनप्रीतिभावः ! तदेवं तदानीं यथा ज्ञानालोचनबलरक्षण-पणनव्यवहारहेतुभिरार्याणां ब्राह्मणादिजातिभेदाः प्रचलिताः, तथैवानार्याणा मपि आर्यानुगतत्वाननुगतत्वभेदात् द्वैविध्यं सम्पन्नम् । ये त्वनार्या अप्यार्याणा मानुगत्य मालम्बिरे, त एव दासाः तद्विपरीतास्तु दस्यव इति व्यपदिष्टाः । त एव च दासाः शूद्रा इति, दस्यवस्तु म्लेच्छा इति चाख्याताः । इत्थ मिह पञ्च जातयो निष्पन्नाः । एताश्च पञ्च जातयो मनुष्याणा मेवेति मनुष्यशब्दपर्यायत्व मासां पञ्चजन इति । तदेव मेषु पञ्चजनेषु कर्मादिभेदत एव ब्राह्मणः, क्षत्रियः, वैश्य इति त्रय आर्याः; दासो दस्युश्चेति द्वावनार्याविति स्थितम् ॥

अथ यद्यपि जातिर्जन्मेति पर्यायशब्दाविति जन्मानुसारि ण्येव जातिरित्येव सर्वसम्मतम्, सम्प्रति तदन्यथाकरणे जात्युच्छेदप्रसङ्गः स्यादिति सत्यम् ! तथापि कर्मतो जात्यन्तरमपि नासम्भवम्! । तदाहापस्तम्बः:— "धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्ण

मापद्यते जातिपरिवृत्तौ"-इति, "अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ"-इति च (२, ५, १०, ११)

मनुरप्याह— "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवन्तु विद्याद् वैश्यात्तथैव च"-इति १०, ६५।
"जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद् गुणैः"
-इति (१०, ६७) च मनूक्तमिह स्मर्त्तव्यम्॥

न च व्यवहारादिभिर्जातिपरिवर्त्तनमदृष्टचरं वक्तव्यम्। तत्रानार्यस्याप्यनार्यत्वनाशोऽभवदपीतिपूर्वीयसूक्तदर्शनसामर्थ्यादिति तु इदानीमेव प्रदर्शितम्; आर्यस्याप्यनार्यत्वलाभोऽपि समाम्नात इहैवैतरेयके। तथाहि — "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः, पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः, तद् ये ज्यायांसो न ते कुशलं मेनिरे, ताननु व्याजहारान्तान् वः प्रजा भक्षीष्टेति। त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"-इति (७, ३, ६.)।

विश्वामित्रस्यास्य जन्मतः क्षत्रियत्वम्, वसिष्ठस्यर्षेर्धेनुप्रार्थनम्, तदलाभात् तत्कृतपुत्रनाशनम्, ततस्तपःप्रभावाद् ब्राह्मणत्वलाभ इति पौराणिकी कथापि स्यादत्रोपयोगित्वेनादरणीया, किन्तु सा नूनमामूलकल्पितैव;—न स महर्षिः कदाप्यासीदब्राह्मणः, नापि कदापि तेन वसिष्ठस्यर्षेर्धेनुप्रार्थनं कृतम्, न च तत्कृतपुत्रनाशस्तथाविधस्य महर्षेः कथमपि युज्यते, नैव स तपःप्रभावाद्ब्राह्मणत्वमापेति सर्वमिदमसङ्गतमनृतं वचः पौराणिकानाम्; वेदमूलकत्वाभावादंशशो वेदविरुद्धत्वाच्चेति वेदानुशीलिनां सुविदितमेवेति दिक्॥

प्रकृते तु यथा च मतौ[illegible]ष्टीयापाश्चभारतीयानां भारतवर्षात्-

सैनिकेषु विद्यमानत्वप्रवेशत्वेऽपि बङ्गदेशीयानां योग्यबलाद्यभावात् एव नास्ति प्रवेशाधिकारः, अस्ति तु व्यांग्फिरिङ्गीति बङ्गप्रसिद्धानां युरोपीयानाम्; तथैवामिश्रितार्यशोणितानामनार्याणां बुद्धि-माद्यादितोऽनुपयुक्ततयैवास्मच्छास्त्रेषु वेदग्रहणायोपनयनविधे-रभावोऽनुग्रह एव, विमिश्रार्यशोणितानां तु वेदव्याससदृशानां वेद-ग्रहणायोपनयनं केन वार्यत मिति स्फुटम्। मनुरप्याह—"बीज मेके प्रशंसन्ति क्षेत्र मन्ये मनीषिणः"-इत्यादि (१०.७०.)। "जातो नार्या मनार्यायां मार्यादार्यो भवेद् गुणैः"-इति च (१०.६७) गुणपक्षपातमात्रेण। शूद्रस्य वेदाधिकारे साक्षात् संहितावचन मपि प्रदर्शितं स्वामिदयानन्देन-(वा० सं० २६.२.)।

"यथेमां वाचं कल्याणी मावदानि जनेभ्यः।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय" इति।

तदेवं वेदविधेः पक्षपातदोषभाक्त्वं न कथ मपीति स्पष्टम्; स्पष्टञ्च दासानामनुपयुक्तमतीनां मन्वादिकर्तृकं वेदानधिकारित्व-विधानमनुग्रहार्थं मेवेति।

वेदाधिकारित्वानधिकारित्वप्रसङ्गादिहान्यदपि किञ्चिद् वक्तव्य मस्ति, तद्यथा—भारतवर्षीयाणा मस्माकं शास्त्रग्रन्थेषु यावन्तो विधिनिषेधा विहिताः, यानि च वर्णाश्रमधर्मशासनानि श्रुतानि स्मृतानि च, तैः खल्विमे वयं भारतवर्षीया एव शास्याः, न त्वन्य-देशीयाः; अत एवोक्तं मनुना—"अस्मिन् धर्मोऽखिलेनोक्तो गुण-दोषौ च कर्मणाम्। चतुर्णा मपि वर्णाना माचारश्चैव शाश्वतः"-इति (१.१०७.)। एवञ्चास्मच्छास्त्रकृता ब्राह्मणादिजातिसञ्ज्ञा त्वस्माक मेव; भारतादन्यत्र ब्राह्मणादयस्त्रयो वर्णाः शूद्रश्चैकश्च नैव सन्तीति तत्रत्यानां ब्राह्मणादिशास्त्रमत्वेनार्यत्वं शूद्रत्वं-

नानार्थत्वं वा न किमपि सङ्गच्छते व्याख्यानानुसारतः । तदेव भिन्नखण्डादिदेशानां म्लेच्छदेशत्वम्, तद्देशीयानां म्लेच्छत्वञ्च न कथमपि सङ्गच्छत इति प्रणिधानेनालोच्यम् । म्लेच्छदेशाः किलात्र भारते विद्यन्त एव, म्लेच्छा अपि भारतीयेष्वेव केचन, म्लेच्छाचाराद्याचारविमुखाना मार्याणा मनार्याणाञ्च भारतीयाना मेव, न त्वन्यदेशीयानाम्; तत्तद्धर्मशास्त्रेषु म्लेच्छाम्लेच्छविज्ञानोपदेशाभावात् । सन्ति ह्यत्र चिरादेव म्लेच्छाः, म्लेच्छदेशाः, म्लेच्छानां म्लेच्छवाक्प्रयोगादिम्लेच्छाचारनिषेधाश्च । शतपथब्राह्मणे त्वसकृदेव श्रुतो म्लेच्छशब्दः (३. २. १. २३, २४.), पाणिनेर्धातुपाठे म्लेछ धातुः (भ्वा० प० २०५.), गणपाठे उञ्छादौ तत्पाठः (६. १. १६०.), कात्यायनस्य व्याकरणाध्ययनप्रयोजनाख्यानावसरे शतपथब्राह्मणमूलकं 'म्लेच्छा ह वा मा भूम'-इति कथनम्, पतञ्जलेः पस्पशायां तद्व्याख्यानम्, मीमांसादर्शने आर्यम्लेच्छाधिकरणम् (१. ३. ५.), मनौ म्लेच्छदेशलक्षणम् (२. २३.) म्लेच्छभाषादेशनिर्देशश्च (७. १४९; १०. ४५; १२. ४३.), महाभारते आदिपर्वणि पाण्डवानां वारणावतगमनप्रकरणे (१४५ अ०) युधिष्ठिरं प्रति विदुरस्य म्लेच्छभाषया गूढोपदेशदानञ्चेतत् सर्वं तन्निदर्शन मिति ।

तदित्थं महिदासस्य शूद्रागर्भजातत्वेऽपि ब्राह्मणग्रन्थप्रवचनशक्तिमत्त्वेन ब्राह्मणत्वं स्यात् सञ्जातं किं तत्र चित्र मित्यत्रैवोपरमामहे वय मिति ॥

एष हि महिदासोऽभूद् दीर्घजीवी, तच्छ्रूयते छान्दोग्यब्राह्मणे —"स ह षोडशं वर्षशत मजीवत्"-इति (५. १६. ७.)। षोडशाधिकशततमवर्षकालव्यापि जीवन मेव मनुष्याणां पूर्ण मायुः । अतएव

तत्रैव ततः प्रागिमान्यपि वचनान्याम्नातानि— "चतुर्विंशतिवर्षाणि प्रातस्सवनम्" प्रथमं वयः, बाल्य मिति यावत् । ततः "चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्" मध्यं वयः, यौवन मिति यावत् । तत उत्तरम् "अष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्" अन्त्यं वयः, वार्धक्य मिति यावत् । एवं सङ्कलनया "प्र ह षोडशं वर्षशतं जीवति" ११६ आयुः पूर्णं सम्पद्यत इत्यर्थः । न चैवं "शतायुर्वै पुरुषः"-इति ( ऐ० ब्रा० २. २. ७. ) श्रुतिर्विरुध्येत ; द्विशतायुर्जीविनः पुरुषस्य वेदे लोके चादर्शनात् । अतएव शतपथे पूर्णायुर्मन्त्रव्याख्यानायैवं प्रोक्तम्—"शतं हिमाः ( य० वा० सं० २. २७. )-इति, शतं वर्षाणि जीव्यास मित्येवैतदाह । तदप्येतद् प्रश्नाद्रियेत ? अपि हि भूयांसि शताद् वर्षेभ्यः पुरुषो जीवति"-इति १. ९. ३. १९ । [illegible] शताद् वर्षेभ्यः किञ्चिदधिक मपि तत्रैव गण्यत इति । एव मपि "द्वावर्षसहस्राणि [illegible] शतानि च । रामो राज्य मुपासित्वा ब्रह्मलोकं प्रयास्यति"-इति महाकविवाल्मीकियुक्तं ( रा० १. १. ९६. ) अल्पकल्पनकल्पं न कदापि भवेन्मन्तव्यम् ; वेदविरोधादिति स्पष्टम् ॥

अनेनैव महिदासेन आरण्यकग्रन्थोऽप्येकः प्रोक्तः । स हि पञ्चधा विभक्तोऽधीयते । तत्र सायणाचार्येण प्रथम-द्वितीयतृतीयांशाना मेव तत्प्रोक्तत्वं स्वीकृतम् । तथा चैतरेयभाष्यभूमिकायाम्— "तस्य महिदासस्य मनसा 'अग्निर्वै देवाना मवमः ( ऐ० ब्रा० १. १. १. )'-इत्यादिकं 'स्तृणुते ( ऐ० ब्रा० ८. ५. ५. )'-इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत् । तत ऊर्ध्व 'अथ महाव्रतम् ( ऐ० आ० १. १. १. )'-इत्यादिकम् 'आचार्याः ( ऐ० ३ आ० २. ६. ९. )'—इत्यन्त मारण्यकव्रतरूपञ्च ब्राह्मण माविरभूत्"-इत्युक्तम् ।

चतुर्थारण्यकविषये तूक्तम् 'महदिदं नवसङ्ख्याकानां ऋचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्म्मकाण्डे पठितुं युक्तम्, तथाप्यरण्य एवाध्येतव्य मित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्' (ऐ० ४आ० १. १. १५.) इति। पञ्चमस्यारण्यकस्य त्वाश्वलायनकृतसूत्रत्व मेवाभाति तत्र। इत्थं प्रथमारण्यकत्रयस्य महिदासप्रोक्तत्वम्, चतुर्थस्य संहितान्तरात् सङ्गृह्य पठितत्वम्, पञ्चमारण्यकस्य तत्परभवत्वं च स्फुटम्। ऐतरेयोपनिषद्ग्रन्थस्त्वेतदारण्यकान्तर्गत एव; परं तत्राप्यस्ति मतान्तरता। इदानी मैतरेयोपनिषदिति प्रसिद्धः शाङ्करभाष्यादिसमन्वितो योऽयं ग्रन्थोऽधीयते सर्वत्र, ततोऽधिकतरं, सायणसम्मतः। तत्र ह्याचार्येण "एष पन्थाः (ऐ० २ आ० १. १. १.)"—इत्यादि, "आचार्याः—(ऐ० ३ आ० २. ६. ९.) इत्यन्तस्य त्रितयस्यारण्यकात्मकः सकल एव ग्रन्थ उपनिषदित्यादि ॥

सोऽयमेक एवैतरेयो महिदासो ब्राह्मणः पारशवो वा, विनाय ब्राह्मणत्व माप्यास्य चत्वारिंशदध्यायात्मकस्य ब्राह्मणग्रन्थस्य तदुपनिषत्संस्थारण्यकत्रयस्य च बभूव प्रवक्तेति सिद्धम् ॥

---

( २ )

अथ कुतत्य सः? को जनपदस्तस्यैतरेयस्य जन्मभूमिर्जननी वेति भावः। अत्र ब्रूमः। एष आर्यावर्त्त एव तज्जन्मभूरिति। तदेतदार्यावर्त्ताभिधानं न क्वचिदपि संहितायां ब्राह्मणे वा श्रुतमस्ति;

धर्त्त्वेन, बलवत्त्वेन, विद्वत्त्वेन, सत्यवादितादिसद्गुणसम्पन्नत्वेन, पवित्राचारत्वेन बहुगौरववन्त आसन्नित्येवेश्वरपुत्रा इत्यभवन् व्यपदिष्टास्तदेवास्माकमार्यनामनिदानमिति ।

महामुनिपाणिनिनाप्येकत्र आर्यशब्दोल्लेखः कृतः— "आर्यो ब्राह्मणकुमारयोः (६, २, ५८)"-इति । त इमे आर्यास्तदानीं मादर्भविज्ञानादि- ब्रह्मविज्ञानान्तविभवा अतिसभ्या अप्यतिप्राचीनाः ब्राह्मणक्षत्रियवैश्येति त्रिविधाः, दस्युदासेति द्विविधासभ्यशूद्रतोऽन्याः, ईश्वरपुत्रा इति व्यपदिष्टा आसन्; ये खल्वद्य कालचक्रपरिभ्रमणनियमतो लुप्तकल्पवेदविज्ञानाः विलुप्तैकाग्रबला नष्टवीर्याश्चात्मवर्णाश्रमहीनाः सन्त एव मुमूर्षुदशापन्ना मुहुः श्वसन्तीत्येव जीविता इति । अथैव एव "आर्या आवर्त्तन्ते पुनः पुनरुद्भवन्तीत्यार्यावर्त्तः" इत्याह च मनुटीकायां कुल्लूकः (२, २२), 'आवर्त्तनं' पुनः पुनर्जन्मग्रहणमिति तदाशयः । अस्माकं तु अस्मात्स्वर्लोकादपि 'आर्याः' ईश्वरपुत्रा इति व्यपदिष्टा मनुष्याः यत्र 'आ' आभिमुख्येन, प्रधानरूपेण, 'वर्त्तन्ते' तिष्ठन्ति, निवसन्तीति स एव भूभाग आर्यावर्त्तः । तदेवार्यावास एव आर्यावर्त्तः ।

स चार्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिणभागे सुवास्तुप्रदेशे पर्याप्तोऽभूदिति गम्यते। श्रूयते ऋक्संहितायाम्— "सुवास्त्वा अधि तुग्वनि"-इति (८, २०, ३७)। व्याख्यातश्चैष ऋगंशो यास्केन —"सुवास्तुर्नदी, तुग्व तीर्थं भवति, तूर्णमेतद्यायन्ति"-इति (४, २, ७)। वास्तुर्वासभूमिः, सा खलु यस्यास्तीरे सुष्ठ्वेव, सा नदी सुवास्तुर्नाम। तत्तीरस्थितो जनपदश्चाभवत् तन्नामतः सुवास्तुरेव। "सुवास्त्वादिभ्योऽण्"-इति (४, २, ७७) सूत्रदर्शनादव-

गम्यते विदितश्चायं प्रदेशः पाणिनेरपीति । कलिंगहाममहोदय-मतेऽस्य 'स्वात्'-इति 'सुवात'-इति वा प्रसिद्धा नद्येव सा सुवास्तुः । सुवास्तुवासकाले एव स्यादियमृक् समाम्नाता ( ५, ५३, ९ ) —

"मा वो रसानितभा कुभा क्रुमुर्मा वः सिन्धुर्नि रीरमत् ।
मा वः परिष्ठात् सरयुः पुरीषिण्यस्मे इत् सुम्नमस्तु वः"-इति ॥

अस्यार्थः ।—'अस्मे' अस्माकं प्रियम् 'अनितभा' अगतप्रभावा सर्वर्त्तुषु अतिप्रभावा* 'रसा' नदी 'वः' युष्मान् 'मा नि रीरमत्' अतिरमणस्य अत्यानन्दतो विहरणस्य बाधां जलप्लावनादिजन्यां मा कुर्यात् । 'कुभा' कुत्सितप्रभावा नदी च 'वः' 'मा नि रीरमत्' । 'क्रुमुः' नदी च 'वः मा नि रीरमत्' । 'सिन्धुः' क्रुमुसङ्गतः सिन्धु-नद्योऽपि 'मा वः नि रीरमत्' । ततः क्रुमुसङ्गतसिन्धुतः 'परिष्ठात्' परस्थिता 'पुरीषिणी' सदैव सजला 'सरयुः' नदी च 'वः' युष्माकम् 'सुम्नं' सुखम् 'इत्' एव 'अस्तु' ।

एतस्मादृङ्मन्त्रात् पूर्वतनार्यावासस्य तस्य चतुस्सीमनिर्देशोऽपि व्यज्यते । तथा च तस्मादुज्जिहानप्रदेशीयसुवास्तुनदीतीरस्थ-सुवास्तुजनपदात् बहुतरस्यातिप्रभावा रसा नद्येव तदुत्तरसीमा ; इदानीं काबुल् नदीति प्रसिद्धा हीनप्रभावा कुभैव स्यात् तत्पश्चिमसीमा ; तत्कालीनप्रदेशीया सरयुरेवासीत् तत्पूर्व-सीमा ( न चायोध्योत्तरकोशलप्रदेशीया सरयूरुपपद्यते, कुभेत्यादि-साहचर्यात्, अर्वाचीने साहचर्येऽपि नियामकत्वं सत्यमेव ; अन्यथा हि रामलक्ष्मणाविति च जामदग्न्यरूपाग्रजयोरन्यतर-स्यापि बोधः स्यात् ) ; अथ कुभाया नीचैः क्रुमुसिन्धुसङ्गम एव तद्दक्षिणसीमेति सम्पद्यते सुतराम् ।

यदा हि सुवास्तुतः पश्चिमस्यां दिश्यवस्थितो निषधपर्वतोऽप्य-

भूदार्य्यावासस्तदाप्ययं सुवास्तुप्रदेश एवासीत् तदीयपूर्वसीमेत्यपि गम्यतेऽपरमन्त्रेभ्यः। तथाहि सं० १, १०४ सूक्तं द्रष्टव्यम्। तत्र प्रथममन्त्रे "योनिष्ट इन्द्र निषदे अकारि" - इति श्रुत्या निषद-स्यार्य्याधिकृतत्वं गम्यते। अतएव शतपथेऽपि श्रुतम् — "नड़ो नैषिधः" - इत्यादि (२, ३, २, १, २.)। ततश्चतुर्थमन्त्र एषः —

"युयोप नाभिरुपरस्यायोः प्रपूर्वाभिस्तिरते राष्टि शूरः।
अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते" - इति।

अस्यार्थः — 'उपरस्य' उपलस्य पर्वतस्य सम्बन्धीति यावत् 'नाभिः' प्रधानावासो योऽस्ति, तम् 'शूरः' विक्रान्तः 'आयोः राष्टिः' मनुष्यराजः कश्चनार्य्यः 'युयोप' रक्षति। तच्च नगरं काले काले 'पूर्वाभिः' प्राग्वहमानाभिर्नदीभिः 'प्रतिरते' प्लवमाना भवति, तत एवापदः स राजा तन्नगरं रक्षतीत्यभिप्रायः। काश्च ताः प्राक् प्रवहमाना नद्य इत्याह — "अञ्जसी"त्यादि। 'अञ्जसी' सुवास्तुतः ऐशान्यां दक्षिणाभिमुखी वहमाना, 'कुलिशी' सुवास्तुतो वायव्यां दक्षिणाभिमुख्येव वहमाना, 'वीरपत्नी' सुवास्तुत आग्नेय्यां दक्षिणाभिमुख्येव वहमाना, एतास्तिस्रो नद्यः 'पयो हिन्वानाः' सत्यः 'उदभिः' प्रवृद्धोदकैः 'भरन्ते' प्लावयन्ति, तं नाभिमिति।

ततः क्रमात्सुवास्तुतः प्राग्दक्षिणस्यामपि बहुदूरस्थां श्रीकण्ठ-शैलसमुद्भूतां अद्य पुन्याश्रमतलवाहिनीं जह्नावीं यावदार्य्यावासः सम्पन्नः। अत एवैषा ऋगाम्नाता (३, ५८, ६.) —

"पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम्" - इति।

जह्नावी जाह्नवीत्यनर्थान्तरमित्यस्माकम्। प्रसिद्धैषा नदी भागीरथ्याः शाखाविशेषेत्युत्तराखण्डेऽद्यापि। जाह्नवप्रदेशस्य पुराणौकस्त्वाम्नानमिदं नूनं व्यक्तिगतं न तु सार्वजनीनमिति

च वेदितव्यम्। जह्नावीतीरस्थो आङ्गवप्रदेश: स्वल्पयतनपाश्च-कोराया: प्राक्, सिन्धुत: प्रत्यक् कुनार् (वर्णु) प्रदेशतश्चोदक् स्थित इति विश्वकोषसम्पादको वसुदास:। एतच्च सुधासुमथिहितैवेयं जह्नावी इति स्वीकारेऽपि न न: क्षति:।

तत एव आर्याश्रम: सारस्वतप्रदेशेषु विस्तीर्ण:। इहैव बहव ऋङ्मन्त्रा: यजुर्मन्त्रा: सामगानमन्त्रा: आथर्वणमन्त्राश्च समाम्नाता:, यागविधयश्चात्रैव समुद्भूता: परिपुष्टा श्च; आर्यसाम्राज्यश्चेहैव प्रथमं विस्तृतम्। अतएव सर्ववैदिकग्रन्थेषु सरस्वतीमाहात्म्यादिकं बहुत्रैव श्रूयते। तथाऽश्वलायनशाखायाम्— १. ३. १०-१२ ; २. ३०. ८ ; ४१. १६ १८, ६. ६१ ; ७. ८५, १. २. ४ ६ ; ८.६. ४-६ ; १०. ७५. ५ इत्येवमादय: समालोच्या:। तद्देशस्य सारस्वतप्रदेशस्य यागभूमित्वेन प्रशंसा अप्यनेकत्र श्रूयते। तद्यथा (३. २३. ४.)

"नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम्।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि"—इति।

अस्यार्थ:।— 'इळायास्पदे' शस्यबहुले, अतएव 'पृथिव्या: वरे' उत्कृष्टप्रदेशे हे 'अग्ने' 'अह्नाम्' दिनानां सुदिनत्वे 'त्वा' त्वां 'आ' आभिमुख्येन 'निदधे' स्थापयामि। कथं स: शस्यबहुल: पृथिव्या वर: प्रदेश इत्याह— 'दृषद्वत्यां', 'आपयायां', 'सरस्वत्याम्' इति; दृषद्वतीतीरत आरभ्य सरस्वतीतीरं यावत् त्रिनदीतीरप्रदेश:, सर्व एव शस्यबहुल:। 'मानुषे' जनपदे तादृशे त्वं 'दिदीहि' दीप्यस्व। अत एवोक्तं मनुना— "सरस्वतीदृषद्वत्यो-र्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते"—

इति ( २. १७. )। किमर्थं त्वां मिदध इत्याह—'अक्तां सुदिनत्वाय'—इति । जोदकालानां सुप्रभातीकर्त्तुमित्यर्थः ।

ततो यदा एष आर्यावर्त्तो बहुविस्तृतस्तदेव त्रिसप्तनदीभिः परिव्याप्त इति वर्णित मस्या ऋक्संहितायाम् । तथा चास्ति शाकलसंहितायां दशममण्डले नवतं मेकं सूक्तम्, तद्धि नदीस्तुतिपरमिति नदीस्तुदिति भाष्यते, ततस्तदानीन्तनार्यावर्त्तप्रधाननदीवर्णनञ्च लभ्यते । तस्येयं पञ्चमी ऋक्—( १०. ७५. )।

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया"—इति ।

अत्र श्रुता गङ्गा (१) नदी त्वस्मद्देशेऽतीव प्रसिद्धा । ततः पश्चिमस्था यमुना (२)। ततः पश्चिमस्था सरस्वती (३)। ततः पश्चिमस्था शुतुद्री (४), याच शतद्रुरित्युच्यते । ततः पश्चिमस्था परुष्णी, सैवेरावतीत्युक्ता यास्ककाले ( निरु० ९. ३. ५. ), एतर्हि त्वैरावतीति । ततः पश्चिमस्था असिक्नी, सैव चन्द्रभागेत्युच्यते । ततः पश्चिमस्था वितस्ता । ऐरावती, चन्द्रभागा, वितस्तेति तिसृणामासां नीचैः सम्मिलनतो याभूदतिप्रसारा मालवदेशीय-काश्यपपुरतः पश्चिमस्थां दक्षिणाभिमुखी महानदी, सैवेह मरुद्वृधेति पञ्चमी (५)। अपि तस्यैव काश्यपपुरतः प्राक्प्रवाहिता या शुतुद्री (शतद्रुः) पूर्व मिह वर्णिता, तस्या एव शतद्रोरुपरिष्टात् पश्चिमपार्श्वतः सङ्गता च प्राचीनतमा आर्जीकीया (६) ; उरुञ्जिरेत्यप्यस्याः प्राचीनतरं नाम, इय मेव विपाडित्युक्ता यास्ककाले ( निरु० ९. ३. ५. ), विपाशा-नामिका सेय मिदानीम् । ततोऽपि पश्चिमस्था सुषोमा (७), येयं तक्षशिलानामप्रदेशाभिमुखगामिनी सिन्धुसङ्गता । एता एव सप्त नद्यो यावद्भागेषु प्रवहन्ति, तावानेव

प्रदेश: सप्तनद इति सप्तसिन्धुरिति वा ख्यायते। सिन्धुश्चैव नदी-पर्याय:। तासु गङ्गायमुने विहाय या: पञ्च नद्यो यावत्सु भूभागेषु प्रवहमाना: सन्ति, स एव पञ्चनद इति, सारस्वतप्रदेश इति चेति सङ्क्षेप:। ऋक्संहिताया मन्त्र मेकं (३. २३. ४.) प्रदश्य यदिह वर्णितो ब्रह्मावर्त्तप्रदेश, तत: परस्तादेव एव प्रदेश: पुण्य भूरिति परिगण्यते। तथा हि मनुसंहितायाम्—

"कुरुक्षेत्रञ्च मत्स्याश्च पञ्चाला: शूरसेनका:।
एव ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तर:" -इति (२. १९.)॥

वर्णित एष सप्तनदप्रदेश: सिन्धो: पूर्वपारस्थ: ; एवं सिन्धो: पश्चिमपारस्थोऽपि विद्यतेऽपर: सप्तनदप्रदेश:। स चेदानी मार्या-वर्त्ताद् बहिर्भूतो ऽप्यासीत् पुरा ह्यार्यावर्त्तान्तर्गत:। अतएव संहि-ताया मित उत्तरं षष्ठ्या मृचि तत्स्थाना मपि सप्तानां नदीनां वर्णनं श्रूयते। तथाहि—

"तृष्टामया प्रथमं यातवे सजू: सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे॥"

इत्यस्मिन् मन्त्रे तृष्टामा प्रथमा, सुसर्त्तु: द्वितीया, रसा तृतीया, श्वेती चतुर्थी, कुभा पञ्चमी, गोमती षष्ठी, मेहत्नुयुता क्रुमु: सप्तमी। इमा: सर्वा एव सप्त नद्यो मध्यहिमालयोत्पन्नस्य पूर्व पश्चिमाभिमुखगामिन: पश्चात् दक्षिणप्रवाहिन: समुद्रगस्य सिन्धु-नदस्य पश्चिमस्यां पूर्वदक्षिणाभिमुखं स्यन्दमाना: सम्यग्यमासत:। तत्रेदानीं चित्रलदेशत: प्राग् वहमाना पञ्चकोर् प्रदेशीया तत्रत्या नद्येव स्यात् 'तृष्टामा'; 'सुसर्त्तु' इति सुवास्तोर्नामान्तरम्, यदत्र स्यादित्युच्यते ; 'रसा' त्वियमपि पूर्ववर्णितैव (२२ पृ० १६ पं०) ; 'श्वेती' स्यादद्यतन-डेराइस्माइलखां-प्रदेशगतलवाहिनी अर्जुनी ;

'कुभा'=काबुल् ; 'क्रुमुः' वर्त्तु-प्रदेशवाहिनी कुरम् ; 'गोमती' सम्प्रति गोमलिति प्रसिद्धा। एताः द्रष्टामाद्याः नद्यः सप्तैव साक्षात् परम्परया वा सिन्धुसङ्गताः ॥

तदेवं चित्रलप्रदेशतः प्राक्, बेलुचिस्थानादितः ऊर्द्धं च यावत् पश्चिमोत्तरस्यां य आसीत् सुविस्तीर्णः पुरातन आर्यावर्त्तांशः स एव एव पश्चिम-सप्तनदप्रदेश इति वक्तुं युज्यते। किन्तु यथा पूर्वसप्तनदान्तर्गतः पञ्चनदप्रदेशस्तथैव पश्चिमसप्तनदान्तर्गतः (आफगान्) पञ्चकोरप्रदेशोऽपीति। अतो गान्धारस्यार्यावर्त्तान्तर्गतत्वं सुतरां सम्पन्नम्। ततः सङ्गच्छते "गन्धारीणा मिवाविका (ऋ० सं० १. १२६. ७.)"-इति संहितावचनम्, उपपद्यते च "नग्नजित् गान्धाराय (ऐ० ब्रा० ७. ५. ८.)"-इति ब्राह्मणवचनम्, तथा "साल्वेयगान्धारिभ्याञ्च (४. १. १६९.)"-इति पाणिनिवचनञ्च ; कुरुराजधृतराष्ट्रपत्नी दुर्योधनादिबहुपुत्रप्रसविनी गान्धारी तु भारतप्रसिद्धैव। वर्त्तुप्रभृतीना मायुधजीवित्वेन वर्णनञ्च पाणिनेर्द्रष्टव्यम् ॥

एतयोः पूर्वापरसप्तनदप्रदेशयोर्मध्ये मध्यहिमवत्समुद्भवोऽवाक् प्रवाहः समुद्रान्तः प्राचीनार्यावर्त्तद्विधाकरणतिप्रबलः सौमदण्ड इवैष सिन्धुर्नामैको नदोऽद्यापि राजते।

तस्यास्य सिन्धोरतिदूरपश्चिमस्या मप्युत्तरस्याञ्चान्यासां सप्तानां नदीनां विद्यमानतापि श्रूयते ; तदस्यैव नदीसुमूलस्य सप्तमाष्टम्योर्ऋचोः समालोच्यं सप्रणिधानम्। तास्वेका 'जर्णावती', स्यादेषा कैलाशनिम्नस्थोर्णाप्रदेशीया ; हिरण्मयी, वाजिनीवती, सीलमावतीत्येता अपि तिस्रः स्युरत्युत्तरस्था एव ; 'एनी' नदी तु निम्नबेलुचीस्ताने प्रसिद्धैव ; तथा चित्रा च चित्रलप्रदेशत आगत्य

कुभायां मिलिता ; 'सुषोमी' अपि स्यात् तत्समीपवाहिनीति सम्भाव्यते ।

एतदुक्तत्रिसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यं च वर्णितं तत्रैव सूक्ते प्रथमम् । तद्यथा तत्सूक्तीयप्रथमर्चः परार्द्ध एषः—

"प्र सप्त-सप्त त्रेधा हि चक्रमुः प्र सृत्वरीणा मति सिन्धुरोजसा"

अस्यार्थः ।—'आपः' नद्यः 'सप्त सप्त' भूत्वा 'त्रेधा' त्रिधा त्रिश्रेण्यः सत्यः 'प्रचक्रमुः' प्रावहन् प्रवहन्ति, अस्मिन्नार्यावर्ते ; सिन्धोः पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्याञ्च सप्तेति । तासां 'सृत्वरीणां' एकविंशतिसङ्ख्याकानां नदीनाम् 'ओजसा' बलेन 'अति' अतिशयितः एको नदः 'सिन्धुः' ।

तासामेव त्रिसप्तनदीनां पुत्र इव राजेव च सिन्धुर्वर्णितस्तत्रैव चतुर्थ्यां ऋचि—

"अभि त्वा सिन्धो शिशु मिन्न मातरो
वाश्रा अर्षन्ति पयसेव धेनवः ।
राजेव युध्वा नयसि त्व मित् सिचौ
यदासा मग्रं प्रवता मिनक्षसि" इति ।

अस्यार्थः ।—हे 'सिन्धो' ! 'मातरः शिशुं न (इव)' इमा नद्यः 'त्वा अभ्यर्षन्ति' त्वां पयः पाययितु मिवाभिमुखं गच्छन्ति, 'पयसा' युक्ताः 'वाश्राः धेनवः' सुशब्दकारिण्योऽचिरप्रसूता गाव इव च । 'त्वं' 'युध्वा' युद्धकारी 'राजा इव' इमौ पूर्वापर-नदीसप्तकौ 'सिचौ' सेनानिवेशाविव 'नयसि इत्' प्रेरयस्येव ; 'यत्' यतः 'आसां प्रवतां' प्रवहन्तीनां नदीनाम् 'अग्रम् इनक्षसि' अग्रगो भवसि, अत इति भावः ।

अन्यत्र चात्र संहितायां त्रिसप्तनदीनां श्रवण मस्ति। तद्यथा —"त्रिः सप्त सस्रा नद्यः"–इति ऋ० सं० १०. ६४. ८।

तत्त्वतस्त्वेतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत् पूर्वकालिकः आर्यावर्त्तः। अत एवैतरेयके श्रुतम्—"यस्तेजो ब्रह्मवर्चस मिच्छेत्०–० प्राङ् स इयात्, योऽन्नाद्य मिच्छेत्०–० दक्षिणा स इयात्, यः सोमपीथ मिच्छेत्०–० उदङ् स इयात्"–इति (१. २. २.)। प्रागादिदिक्शब्दाश्च कञ्चिदवधि मपेक्षन्ते, कुतः प्रागित्याद्याकाङ्क्षायाः सर्वत्रोपजायमानत्वात्। तदत्र आर्यावर्त्तीयसिन्धुमध्य मेवावधिं मन्यामहे, तस्मात् सिन्धुतः प्रागित्यादिस्वीकारेणैव तेजस्त्वादिसिद्ध्युपपत्तेः। तथा च सिन्धोः प्राग्देशेषु सरस्वत्यादितीरभूमिषु यज्ञानुष्ठानबाहुल्यश्रुतेस्तेजस्त्वब्रह्मवर्चस्वयोर्लाभः समुपपद्यते; शतद्रुसङ्गमसिन्धुतो दक्षिणस्यां हिमप्राचुर्याभावात् तापप्राबल्यात् भवत्येव पक्वशस्योत्पत्तिः; सिन्धुतः पश्चिमस्या मरण्यप्राचुर्यात् तत्र पशुलाभः सम्भाव्य एव, शतद्रुसिन्धुसङ्गमादुत्तरस्या मतिशैत्यात् सोमस्य च शीतप्रभवत्वात् वल्लीसोमस्य लाभः, शारीरसोमस्य च वृद्धिर्भवेदेवेति। तादृश मतिप्राक्तनार्यावर्त्तस्यायं सिन्धुर्मेरुदण्ड इवासीदिति प्रतीयते। इत एव सकारादेर्हकाराद्युच्चारणकृद्भिः पाश्चात्यैरिदं भूखण्डं सिन्धुस्थान मिति वक्तव्ये हिन्दुस्थानित्युच्यते।

किञ्चात्र सिन्धुसङ्गतातिविक्रान्ता यासीन्नदी रसेति विश्रुता, द्वितीयनदीसप्तके तृतीयेति च वर्णिता, सैवासीत् तदानीन्तनार्यावासस्योत्तरसीमेति गम्यते। तथा ह्यनुक्रान्त मिदं शौनकाचार्येण—'किमिच्छन्ती पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमां देवशुनी मिन्द्रेण प्रहिता मयुग्भिः पणयो मितीयन्तः प्रोचुः, स

तान् युष्माभिरनिच्छन्ती प्रत्याचष्टे"—इति। तस्यैतस्येदं सायणकृतं भाष्यम्— "इन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नवसरे पणय इदं ज्ञात्वा अवगच्छन्त एनां मित्रीकर्तुं संवाद मकुर्वन्। तत्र प्रथमतृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि,०--०, द्वितीयचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि"- इति। वस्तुतोऽत्र पणयः—वणिजः, सार्थवाहा इति यावत्; "पणिर्वणिग् भवतीति (२. ५. ३.) नैरुक्तात्। असुराः—बलवन्तः (निरु० ३. २. २.)। नूनमेते बहु आर्येतरा एव कुशान्ते। सरमा देवशुनी दिव्यगुणोपेतास्वामिका सुशिक्षिता कुक्कुरी; वलपुरीस्था गुहा तु नूनमार्यशासनाद्बहिःस्था; तथाऽनार्यैरपहृता आर्यगावः कुक्कुरीमन्धानेन पुनर्लब्धा इत्येतावत् सारम्, सर्वमन्यत् राजनैतिकं काव्यम्। तदिदं काव्यं ऋक्संहिताया दशमे मण्डले एकादशभिः ऋग्भिर्वर्णितम् (१०. १०८. १११.)। तत्रादिमैषा—

"किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि"
—इति।

तदित्थं ज्ञायते, या खलु पूर्वं सवात्मप्रदेशस्योत्तरसीमेति वर्णिता, सैवेयं प्रचुरोदका प्रभूतवेगा च नदी पुरासीदार्यानार्यदेशयोः सीमरूपेति।

सेयं 'रसा' ऋक्संहितायां बहुशो वर्णिता। तद्यथा ८, ४९, २—

"गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः"—इति।

यथा गिरेः' 'रसाः' नद्यः 'प्रपिन्विरे', 'अस्य पुरुभोजसः दत्राणि' तथैव प्रपिन्विरे इति तदर्थः। एतेनावगम्यते रसायाः कस्माच्चिद् गिरित एव समुद्भवः। अपि यथा सिन्धोः पूर्वप्रदेशीयसप्तनदीषु 'गङ्गा' एकापि, अन्यासामपि नदीनां निराबाधैवास्ति गङ्गेति प्रसिद्धिः; 'सरस्वती' एकापि प्राधान्याद् बह्वीनामप्यासां नदीनां वाचिका; तथैव सिन्धोः पश्चिमप्रदेशीयसप्तनदीषु एकापि 'रसा' बह्वीनामन्यासामपि नदीनां वाचिका भवति। किञ्च यथा गङ्गेति नदीनां साधारणं नाम, यथा च सरस्वतीत्यपि, तथैव रसेति च। अत एव निरुक्ते यथा गङ्गाशब्दस्य 'गङ्गा गमनात्'-इति निरुक्तिः कृता, यथा च सरस्वतीशब्दस्य 'सरस्वती' सर इत्युदकनाम; सर्तेस्तद्वती—इति निरुक्तिः कृता; तथैव रसाशब्दस्यापि 'रसा नदी, रसतेः शब्दकर्मणः'-इति कृतैव नदीसाधारणबोधिका निरुक्तिः। एवं सप्तेष्वमादिषु योगरूढ्यर्थः सर्वत्र विवक्षितः। निरुक्तकृतः प्रदर्शितरसानिरुक्तेस्तस्या नद्याः सदैव शब्दकारित्वञ्चावगम्यते। प्रदर्शितेऽत्र ऋङ्मन्त्रे 'रसाः'-इति बहुवचनश्रुतेस्तद्बहुत्वमपि गम्यते। तथा च यथा हिमवत्पृष्ठेषु बह्व्यो गङ्गाः सन्ति, यथा च सरय्वा अपि द्वित्वं सिद्धं पुरस्तादुररीकृतम्, तथैव रसाबहुत्वमपि स्वीकार्यम्। रसाद्वित्वन्तु नूनमङ्गीकार्यम्; प्रदर्शिते "तृष्टामया (१०. ७५. ६.)" -इति मन्त्रे तस्याः सिन्धुसङ्गतत्वस्य, "समुद्रं रसया सहाहुः (१०. ७२. ४.)"-इति मन्त्रे तस्याः समुद्रसङ्गतत्वस्य च स्फुटाव

गमात्। समुद्रसङ्गता तु सा पश्चात्तनार्यावर्त्ततो बहिर्गता, कोरा-सान्-राज्यान्तर्गता 'आर्गेस्ता'-प्रत्यवर्णिता, 'रंहा' इत्याह विश्वकोषकारः। तथा चेयं रसा तदानीन्तनार्यावासस्य पश्चिमसीमेति च स्यात् पूर्वदर्शित-देवशुनीपणिसंवाद एतद्विषयको वेति।

अंशुमत्याख्या नद्यप्येतदार्यावर्तीया एवेत्यत्र किमस्ति वक्तव्यम्। "अंशुमती" ऋ० मं० ८. ९६. १३, १४. १५ ऋचो द्रष्टव्याः। सेषा यमुनासङ्गता, दृषद्वतीतः प्राक् स्थिता। "अश्मन्वती" च ऋ० मं० १०. ५३. ८। एषा किल घर्घरातः प्रत्यक्, शतद्रुतो वस्तुप्राक्, उत्तरतोऽवाग् वहमाना, विनशनप्रदेशीया।

यदि च नदीपरपारगमनं श्रुतम्, तन्नूनं मध्यएशियातः समागतानां पूर्वतनार्याणां वच इति जर्मनादिपाश्चात्यविद्वान्तोऽनर्थको निर्मूलश्च; स्थानीयार्याणां वच एवेत्युक्त्यैव तथोपपत्तेः: किं बहुना अंशास्तम्भामहानुकर्षणीनेति सुधीभिर्विभाव्यम्। ऋ० मं० १. १०४. १, २, ३ ऋक्षु वर्णिता शिफा नाम नदी तु निषधदेशीयैव सम्भाव्यते। तत्प्रथमर्च्येव निषदनाम्नोल्लेखदर्शनात्। ऋ० मं० ६. २७. ६, ७ ऋग्द्वयस्थे 'हरियूपीया' 'यव्यावती' च नद्यौ आफगानस्थानीये एव सम्भाव्येते। तत्रच तत्रत्य 'हजारा'प्रदेशीया सम्प्रति हरिरूदित्युच्यमाना नद्येव स्यात् वैदिकहरियूपीयेति।

"पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन्।
द्वा धनुं बृहतीमप्स्वन्तः पवित्रवन्ता चरतः पुनन्ता"-इति।

अस्मिन् मन्त्रे (ऋ० मं० १०. २७. १७.) अन्यत्र च यद् ध्वन्यते अक्षा इति, तदपि स्यात् आफगानस्तरत्र प्रवहमाना 'अक्षस्' नदीति च सुवचम्।

श्वेती नद्येव सम्प्रत्यर्जुनीत्युच्यत इत्युक्तं पुरस्तात् (पृ० २७

यं२४ ) ; सा हि श्वेतपर्वतान्निर्गतेत्येव तस्यास्तथा नाम सम्पन्नम् । आम्नातश्च शतपथे— "प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः"-इति १४. ६. ८. ८। ऋक्संहितायां नूनमेषैवाम्नाता "श्वेत्या त्या"-इति १०. ७५. ६। श्वेतयावरी नद्यपि स्यात् तच्छ्वेतगिरिप्रभवैव। यदिदं श्रूयते— "उत स्या श्वेतयावरी"-इत्यादि ८. २६. १८। अपि संहितायां सरयुनदी त्रिः श्रुता ( ४. ३०. १८ ; ५. ५३. ९ ; १०. ६४. ९. ) तत्र सर्वत्रैव सिन्धुसङ्गता तत्रशिलानामनगरीतलवाहिन्येव गम्यते। अपि यच्छ्रूयते वाजसनेयिसंहितायाम्— "काम्पिल्यवासिनी"-इति ( २३. १८. ) सैषा काम्पिल्यनगरी प्रवराध्यायवचनात् दशार्णप्रदेशतः प्रागिति गम्यते, अद्यापि कम्पिलेत्येव प्रसिद्धा दक्षिणपाञ्चालस्था। साङ्काश्यनगर्यपि तत्रैवर्त्तेऽस्ति। बृहदारण्यकोक्तः कपिप्रदेशोऽपि ( ३. ३. १ ; ७. १. ६. ५. १. ) तत्सन्निहित एव। निरुक्तोक्तः कपिष्ठलोऽप्यत्रैव ( ४. १४. )। अनतिप्राचीनपुराणेतिहासवर्णिता यक्षु-वक्षु-सीता-गौर्यादयस्तु आर्यपरिव्राजकविज्ञाता अपि नास्मत्पूर्वतनार्याणां निकेतनभूमयः। तत्वतो या पुनर्नद्यो हिमवत्पृष्ठोत्तरभागतः प्रवहमानाः प्राच्यप्रतीच्योदीच्यभूखण्डगताः, ताः सर्वा एवान्यदेशीया इति ध्रुवम् ; अपि यास्तु हिमवत्पृष्ठदक्षिणभागतः प्रवहमानाः प्रागपाग्भूखण्डगतास्ताः सर्वा अस्मद्देशीया एव ; बिन्दुसरोमानससरोरावणह्रदादयोऽप्यार्यपरिव्राजकपरिचिता अपि नास्मद्देशीयाः किं मत्र चिन्तनीय मस्ति। शर्यणावत्सरस्तु* नूनमार्यावर्त्तीयम्। तदाहुः शाट्यायनिनः— "शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते"-इति ऋ० सं० १. ८४. १४ सा० भा० द्रष्टव्यम्।

पाणिनिसूत्रग्रथितं कापिशनगरं सम्प्रेतस्खविधावेव। तत्र मधुद्राक्षे च भवत इत्यष्टतरे, तत एव तदुदाहरणद्वयं दर्शितम् 'कापिशायनं मधु, कापिशायनी द्राक्षेति। श्रूयते चैष मन्त्रः (ऋ० मं० १०. ३४. १.)—

"प्रावेपा मा बृहतो मादयन्ति
प्रवातेजा इरिणे वर्वृतानाः।
सोमस्येव मौजवतस्य भक्षो
विभीदको जागृविर्मह्यमच्छान्"-इति।

'प्रावेपाः' सततकम्पनशीलफलाः, 'प्रवातेजाः' अपरवनस्पत्यादिशून्ये बहुवायुयुते प्रान्तरे जनिष्णवः 'इरिणे' इरानमानपारस्यदेशे 'वर्वृतानाः' अधिकतया वर्तमानाः 'बृहतः' विभीदकवृक्षाः 'मा' मां मादयन्ति। 'जागृविः' भक्षयितुर्जागरणहेतुः, 'विभीदकः' कोष्ठस्य मलस्य वायोश्च भेदनकारी, एवं 'मौजवतः' मूजवन्नामपर्वतोत्पन्नस्य सोमस्य 'भक्षः' भक्ष्यांशः 'इव' 'मह्यम्' 'अच्छान्' छदयति, मोहयतीति।

इरिण मित्यस्य यास्केन द्विविधा व्याख्या कृता—'इरिणं ऋणातेरपार्णं भवति, अपरता अस्मादोषधय इति वा'-इति (९. १. ७.)। तयोराद्योऽर्थं एवात्र उपपद्यते; तद्देशीयानां हि भारतीयानामिव पुत्रपौत्रादिष्वपि पितृपैतामहं ऋणं न सङ्क्रमत इति दर्शनात्। मूजवान् पर्वतस्तु कैलासगिरेः पश्चिमस्थोऽद्यापि राजते।

तदेव ऋक्संहिताकाले इरान्-नाम-जनपदस्य आर्यावर्तीयत्वं तथा मूजवतोऽपीति ध्यातव्यमिति।

अथर्वसंहितायाः पञ्चमकाण्डीयचतुर्दशाध्यायद्वाविंशतितमसूक्तस्य

तृतीयमन्त्रे परुषनामजनपदस्य, चतुर्थे महावृषप्रदेशस्य, पञ्चम-सप्तमयोः मूजवत्प्रदेशस्य बह्लिकदेशस्यापि, अष्टमे पुनर्महावृषमूज-वतोः, नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे अङ्ग-मगध-मूज-वद्-गन्धारीणां च श्रवण मस्ति ; पर मुक्ता इमे सर्व एव जनपदा-स्तदानी मासन्ननार्यवासा इत्येव गम्यते ; न ह्यन्यथेषु तक्म स्थापन मभीष्टं भवेदिति । तद्यथा तत्रतुर्थमन्त्र एषः—

"गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।
प्रैष्यं जन मिव शेवधिं तक्मानं परिदद्मसि"—इति ।

न ह्यार्यवासस्थेषु तक्मस्थापन मिष्टं स्यादाथर्वणिकानाम् ।

नन्वेवं परुष (पेशावर) देशस्य, गान्धार (कन्दाहार) प्रदेशस्य, पूर्वमुक्त मार्यावर्तान्तर्गतत्वं किं न विरुध्येत ? अत्र ब्रूमः । तयो-रार्यावर्तान्तर्गतत्वेऽपि एतन्मन्त्रदृक् कालेऽनार्यवासत्वे कोऽस्ति बाध इति ; कालभेदात् सर्वसामञ्जस्यं भवेदेवेति । न चैव मप्यथर्व-संहिताया ऋक्संहितातो विभिन्नकालिकत्वं मन्तव्यं स्यात् ; मन्त्राणा मेव प्रकाशकालपार्थक्यस्वीकारात् तदुपपत्तेः । स्वीकृतश्चै-तदस्माभिर्निरुक्तालोचने (ठ पृ०) 'वस्तुत एक एव वेदः'—इत्यारभ्य (ठ पृ०) 'चत्वार एव वेदास्त्रयीशब्दवाच्याः'—इत्यन्तेन, पुनः (त पृ०) 'यास्केन'—इत्यारभ्य (त पृ०) 'पुरा तु बहुकाल मभि-व्याप्य बहुभिरू षिभिर्बहुभिरेवोद्वावचैरभिप्रायैः प्रणीता बहवो मन्त्राः'—इत्यन्तेन च ।

प्रदर्शितं मूजवन्नाम तु ऋक्संहितायां (१०, ३४. १) श्रूयते इति सत्यम् ! परं न तथापि मूजवत्पर्वतस्यार्यावासत्वं प्रतीयते, प्रतीयते तु तत्रत्यसोमाना मौत्कर्षमात्रम् । यच्चाथर्वणिका नाम्— "उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम्"—इति

(५. ४. ८.), अस्मादपि तत्रत्यकुरुस्थौत्कर्षमात्रं गम्यते। सोमस्य।मार्याभिजनत्वन्तु ऐतरेयब्राह्मणेऽपि सुव्यक्तम्। एवं महावृषस्यापि सिद्धान्त: अत एव। श्वेतपर्वतादपि प्रतीच्यस्य वाह्लीकस्य तु यदार्यावासत्वं प्रतीयते "वाह्लीक: प्रातिपीय: शुश्राव"-इत्यादि (शत० ब्रा० १२. ३. ३.) श्रुतित:, तस्यापि कालभेदतो व्यवस्थैव स्वीकार्या; अपि वा तस्यार्याभिजनत्वे च न कमपि बाधं पश्याम:। अङ्गराज्यस्य चासीत् तदानी मनार्यत्व मेव; कुरुराजदुर्योधनकालत एव तस्याभवदार्यावर्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दा श्रूयते ऋक्संहिताया मपि।

तथाहि (ऋ० सं० ३. ५३. १४.)—

"किं ते कृण्वन्ति कीकटेषु गावो
नाशिरं दुह्रे न तपन्ति घर्मम्"-इति।

निरुक्तकारेण चैतद्व्याख्याया मुक्तम्— "कीकटो नाम देशो ऽनार्यनिवास:"-इति (६. ६. ४.)। कीकट एव मगध:; अस्ति हि स्मृतिवचनम्—"कीकटेषु गया पुण्या, पुण्या नदी पुनःपुना। च्यवनस्याश्रमं पुण्यं पुण्यं राजगृहं वनम्"-इति, गयादयस्तु मगधराज्यान्तर्गता इति प्रसिद्ध मेवेति॥

तत्रत्यो हिमवत्पृष्ठमध्यस्थो मूजवान्नाम नगराजस्तु स्यादार्यवासोऽनार्यवासो वा, पर मासीत् पुरार्यावर्तोत्तरसीमेति तु मन्तव्य मेव। अत एव वाजसनेयिन: समामनन्ति— "एतत् ते रुद्रावसम्, तेन परो मूजवतोऽतीहि"-इति (सं० ३. ६१)। एतस्यैव यजुषो व्याख्यान मिदं शतपथे। तथाहि— "अवसेन वा अध्वानं यन्ति, तदेनं सावस मेवान्ववार्जति यत्र यत्रास्य चरणं, तदत्र ह वा अस्य परो मूजवतोऽतीहि"-

इति (२. ६. २. १७)। तदेव मत्र मन्त्रे रुद्रनामकमृत्यु-देवताया मूजवतः परपारे गमनप्रार्थनात आर्यावर्त्तत एव दूरगमनं प्रार्थितं गम्यते ॥

तदेव म ग्रतनपारस्थराज्यपश्चिमोत्तरस्थे शिग्रामाद्गनरतः प्राक्, प्रत्यगनुगङ्गप्रदेशात्, उदक् सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाय मार्यावासः आर्यावर्त्तो वा संहिताकालीन इति निश्चयते ॥

आर्यसाम्राज्यं तु इतोऽप्यन्यत्र च स्थित मित्यन्यदेतत्। तथाहि (ऋ॰ सं॰ ७. १८. १९.)—

"आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत्।
अजासः शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि"—इति।

अस्यार्थः। — यः 'इन्द्रः' सम्राट् 'अत्र' राज्ये 'सर्वताता' सर्वकर्मसु 'भेदं' राजप्रजयोर्विचारादिवैलक्षण्यं 'प्रमुषायत्' प्रमुष्णाति प्रच्छन्नीकरोति, एवं क्लृप्तैव सर्वाः प्रजाः 'आवत्' अवति, तम् 'इन्द्रं' सम्राजं 'यमुनाः', 'तृत्सवः', 'अजासः', शिग्रवः', 'यक्षवः' 'च' यामुनप्रदेशादिवासिनः सामन्तराजानः 'अश्व्यानि' अश्वादिवाहितानि, 'शीर्षाणि' शीर्षतः प्रवाहितानि 'च' 'बलिम्' उपढौकनं 'जभ्रुः' प्रददुरिति।

अस्या ऋचि श्रुताः यामुनादयः सर्व एव जनपदाः तदानीन्तना-र्यावासतोऽप्यतनादस्मादार्यावर्त्ततश्च बहिर्भूता एव स्युः। अत्रो-भयत्रास्ति च किञ्चिद् विचार्यम्। गङ्गायाः प्रत्यक्पार्श्वस्थिता एषैव यमुना अस्या ऋचि श्रुता, उतान्येति ? अवगम्यते त्वन्यैव। शिग्रु-जनपदोऽपि आकन्दभागाप्रभवोर्ध्वगतादन्य एवेति। अपि वा आर्यावर्त्तीयावच्छेदौ तदानीं परदप्रदेशावेवेत्यपि किं चित्र मिति ॥

अथैतरेयकाले यदार्यावर्त्त मासीद् य इत्यायतनं, तदपि किञ्चिदवगम्यते तद्ग्रन्थत एव । तथाहि श्रूयतेऽभिषेकप्रकरणे —"प्राच्यां दिशि ये के च प्राच्यानां राजानः०—० दक्षिणस्यां दिशि ये के च सत्वतां राजानः०—० प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां०—० उदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्राः०—० ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते"-इति ( ८. ३. ३. ) ।

अत्र, 'प्राच्यानां राजानः'-इति सामान्येन श्रवणादवगम्यते न तदानीं प्राच्यां दिशि प्रबलः कश्चिदासीन्नरपतिः, प्रत्युतासन् क्षुद्र-राजानो बहव इति । अत एव श्रुत मत्रैवान्यत्र "प्राच्यो वामता बहुलाविष्टाः"-इति ( ३. ४. ६. ) । तदानीं प्रागुदेशीय-पार्वत्य-जनपदो य आसीदासंहिताकालात् प्रसिद्धः किरातनगरादिकः तत एव सोमक्रयीणां क्रयो विहितश्चाप्यैतरेयके—"प्राच्यां वै दिशि देवाः सोमं राजान मक्रीणन"-इति ( १. ३. १. ) । तदेवं पाणिन्यागमे हि येषां कान्यकुब्जाहिच्छत्रादीनां प्राच्यभूमौ विद्य-मानतोपलभ्यते, ऐतरेयकाले तु तेषां नगराणा मासीदना-विर्भाव एवेति ।

दक्षिणस्यां तदानी मासीदेकं सत्वद्राज्य मेव बलवत्तमम्, यदिदानीं छत्रपुरित्याख्यायते । तदेतत् "आदत्त यज्ञं काशीनां भरतः सत्वता मिव"-इति ( शत० ब्रा० १३. ४. ५. २१. ) गाथा-वचनश्रुतेरेतदैतरेयतोऽपि बहुप्राचीनतरं भरताधिकृतञ्चेति गम्यते । स्याद् दौष्यन्ति-भरतेन तत् स्थापित मिति तद्वंश्याधिप मिव भरता इत्येवोच्यन्ते, दृष्टश्चैतदैतरेयेऽपि भरताधिकृत मेवेति ।

अतएवेहान्यत्र श्रुतम्— "तस्मादप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति"-इति (२. ४. १.)। अन्यच्च "तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति"-इति (३. २. ६.)। अनयोः श्रुतिवचनयोः 'आयन्ति' 'प्रयन्ति'-इति वर्त्तमानकालिकप्रयोगदर्शनात्, 'इदम्'-इत्यङ्गुल्या निर्देशाच्चावगम्यतेऽनेनैतरेयेण स्वयमपि दृष्टं स्यात्साम्राज्यं भरतवंशीयशासनाश्रितमिति। तस्य च दौष्यन्तेर्भरतस्य राज्ञः कीर्त्तिकथा बहुप्राचीना इत्यैतरेयादिषु गाथेति व्यपदिष्टा। तद्यथैतरेये— "तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च।
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः।
यस्मिन्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे।
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु।
गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्।
त्रयस्त्रिंशच्छतं राजाश्वान् बध्वाय मेध्यान्।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः।
महाकर्म भरतस्य न पूर्वे नापरे जनाः।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्चमानवाः"

-इति (८. ४. ९.)।

शतपथेऽप्येवमेव श्रूयते प्रायः—"तदेतद् गाथयाभिगीतम्" -इत्यादि (१३. ५. ४. ११-१४.) द्रष्टव्यम्।

प्रतीच्यां दिशि तु एकमप्यासीत् सुमहद् राज्यं मध्याहृदुपर-भागे पर्वतपादस्थभूमिपाः 'नीच्याः' केचनाप्रसिद्धराजानस्तथा

दक्षिणभागीयप्रशाखाः केवलं, मध्यभागे स्वल्पभूमय एवेत्युक्त मिव नीचाना मधाचाना मिति। इहैवाप्यत्र श्रूयते "प्राचि दीर्घा-रण्यानि भवन्ति"-इति (२. ४. ६.), "प्रतीच्योऽप्यापो बहुलाः स्यन्दन्ते"-इति (१. २. १.) च।

उदीच्यां तु हिमवत्पृष्ठदण्डस्योत्तरे भागे आर्यावर्त्ताद् बहिर्विभ-भागावपि आर्यमित्रजनपदाविमौ उत्तरमद्रः उत्तरकुरुश्चेति श्रूयेते। एवं हि गम्यते— यथैव हिमवतो दक्षिणभूभागोऽय मार्यावर्त्तो मद्रदेश-कुरुदेशाभ्या मासीत्तदानीं द्विधा विभक्तः, तथैव हिमवत उत्तरभूभागश्च स मद्रदेश-कुरुदेशाभ्या मासीत् पुरा द्विधैव विभक्त इति। आर्यावर्त्तीयमद्रदेशादुत्तर इति उत्तरमद्र इत्युच्यते सः, आर्यावर्त्तीयकुरुदेशादुत्तर इति उत्तरकुरुश्चेति। आर्यावर्त्तीयप्रत्यन्तदेशेभ्यः परस्तात् ये देशा म्लेच्छदेशा वा सन्ति, न तेषु मन्वाद्युक्तार्यानार्यनामादिसम्बन्ध इत्युक्तं पुरस्तात् (१७ पृ० १६ पं०), तथा च तद्देशवासिना मार्यत्व मनार्यत्वं वा नैव विचार्य्य मस्ति; परमुत्तरकुरुदेशस्य नैसर्गिकसौन्दर्यस्वास्थ्यकरत्वा-दितः, तद्देशवासिनाञ्च शान्तिप्रियत्व-तपःपरायणत्वादिदैवस्वभाव-दर्शनात्, पुण्यमयत्वं देवक्षेत्रत्व मजेयत्वञ्च। तथाप्यैतरेयकम्— "देवक्षेत्रं वै तन्न वै तन्मर्त्यो जेतु मर्हति"-इति (८. ४. ९.)। तेषां शान्तिप्रियत्वादिस्वभाव एवाजेयत्वे हेतुः प्रथमः। तदुक्तं महाभारतीय-सभापर्वणि आर्जुनदिग्विजये—

"तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम्। ऋषिकुल्या-स्तथा सर्वान् ददर्श कुरुनन्दनः॥ × × × ॥ तत एवं महा-वीर्या महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचन मब्रुवन्॥ पार्थ! नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपा-

६

वर्षं स्व कल्याण पर्य्याप्त मिद मच्युत ॥ × × × ॥ न चात्र किञ्चिज्जेतव्य मर्जुनात्र प्रदृश्यते । उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते ॥ × × × ॥ अथेह पुरुषव्याघ्र ! किञ्चिदन्य-च्चिकीर्षसि । तत् प्रब्रूहि करिष्यामो वचनात् तव भारत ॥ ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव । पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः ॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मन्यसे । युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम् ॥ ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च । क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्"–इति २८ अ० ४–१६ श्लो० । तदिदं महानगरं सम्प्रति तोब्बदित्युच्यते, स्तोल्वत्रदिति तदर्थः ; एतद्देशीया हि प्रायशः स्थूलनासिकोदरजङ्घा भवन्ति ।

अस्ति चान्यः कुरुवर्षः ; स नूनं मेरुसन्निद्धः, 'शाक्तपितृवर्ग'-प्रभृति 'सुवीर्य्य'–देशान्तः, योऽय मद्यतन सेण्टपिटर्सबर्गादिसाइ-बीरियान्तः । तस्य स्वर्गत्वेन वर्णनञ्च महाभारतरामायणादौ बहुत्र । तद्यथा महाभारतीयानुशासनपर्वणि—"अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् । उत्तरान् वा कुरून् पुण्यानथ-वाप्यमरावतीम्"–इति ( ५४. १६ ) । पुनस्तत्रैव—"सर्वेषिकां सर्व-गुणोपपन्नां ददाति वै यस्तु नरो द्विजाय । स्वाध्यायचारित्र-गुणान्विताय तस्यापि लोकाः कुरुषूत्तरेषु"–इति ( ५७. ३३. ) ।

अथ यदिह 'मध्यमायां दिशि'–इति, ततो गम्यते कुरुपञ्चा-लादयश्चत्वार एवैते प्रदेशा स्तदानी मासन् मध्यदेशाः, आर्य्या-वर्त्तस्य मध्यभूभागा इति यावत् । तत्र च यश्चतुर्थो वशो-देशः, स एव स्यात् महाभारतादिप्रसिद्धः 'शिविः' । किञ्च य एते 'ध्रुवायां प्रतिष्ठायाम्' इति द्वे पदे तद्विशेषणे श्रूयेते, ततो

ज्ञायते चात्रैव मध्यार्यावर्त्ते तदानीन्तनसम्राजां मासीद्राज-धानीति । एवञ्च कुरु-पञ्चाल-शिवि-सौवीरप्रदेशात्मकमध्यदेशात एवात्र प्राच्यादयो दिशोऽभीष्टा इत्यपि नानवगतम् ॥

तदेव मैतरेयकाले हिमवद्दक्षिणपार्श्वमिन्नस्थं किरातजाति निकेतनं किरातनगर मेवासीत् आर्यावर्त्तस्यास्य पूर्वप्रत्यन्त:, दक्षि-णस्यां भरतवंशीयाधिकृतं सत्वद्राज्य मप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्यां गिरिगिरिनदीग्रामसीमानां प्राचुर्यवर्णनात् गान्धार-देशादिभ्य: परस्तादप्यासीदार्यवास इति गम्यते, उत्तरस्यान्तूत्तर-कुरूणा मजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति । एकत्र चात्र श्रुतम्— "त एतेऽन्ध्रा: पुण्ड्रा: शवरा: पुलिन्दा मूतिवा इत्युदन्त्या बहवो भवन्तीति" (७. ३. ६.) । तत्र 'एते'-इति इदंशब्दव्यवहारादैतरेयकालेऽप्यासन्निमा जातय इति, 'उदन्त्या:'-इत्युक्ते प्रत्यन्तवासिनोऽनार्या इति च गम्यते । तथाचैषां देशाना मनार्यभूत्वाभिधानादेषा मन्त:स्थिता: प्रदेशा एवासन् तदानी मार्यभूमय इति सुवचम् । अन्ध्रजातयोऽधुना दाक्षिणात्येषु प्रसिद्धा, पुण्ड्र इति त्विदानीं 'दीनाजपुर'-इति प्रत्न-तत्त्वानुसन्धित्सवो वदन्ति, एवं शवरपुलिन्दमूतिवा: विन्ध्यगिरि-वासिनो म्लेच्छजातिविशेषास्त्वद्यापि प्राय: प्रसिद्धा एव । तदेवं न तदाप्येष आर्यावर्त्त: प्राच्या मतिविस्तृत इत्येवास्माकम् ॥

अथ श्रूयते ह्येतद् विदेघमाथवाख्यानं शतपथे १ का० ४ अ० १ ब्रा० १०-१८ क० "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार ०—० स इमा: सर्वा नदीरति ददाह सदानीरेत्युत्तराद् गिरे-र्निर्धावति तां हैव नातिददाह, तां ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति । तत एतर्हि प्राचीनं बहवो

ब्राह्मणास्तदा चेदतर मिवास स्रावितर मिवास्वदित मग्निना वैश्वानरेणेति। तदु हैतर्हि क्षेत्रतर मिव ०—० सैषाप्येतर्हि कोसलविदेहानां मर्यादा, ते हि माथवाः ०—० स ह वै मुखान्निरपादीति"-इति। एतस्मादाख्यानात् व्यक्त मभिगम्यते, विदेहनाम-मैथिलजनपदस्यानतिप्राचीनार्यभूत्वम्। परं न तदापि दक्षिण-मगधस्यार्यावर्त्तत्वं सम्पन्नं मन्यामहे वयम्; अनतिप्राचीनपात-ञ्जलमहाभाष्यवर्णितार्यावर्त्तलक्षणतोऽपि दक्षिणमगधात् प्रत्यगेवा-र्यावर्त्तत्वप्रतीतेः। यदीह शतपथे ( १२. ९. ३. ३. ) "बाह्लिकः प्रातिपीय शुश्राव"-इति श्रवणात्, तदाप्यासीद् बाह्लीकस्यार्या-वर्त्तत्व मिति च स्वीकार्यम् ॥

पाणिन्यागमेऽपि आयुधजीविवाचिपर्श्वादिगणे पठितो बाह्लीकः ( पा० सू० ५. ३. ११७. )। "कम्बोजाल्लुक्"-इति ( पा० सू० ४. १. १७५. ) कम्बोजग्रहणञ्च दृश्यते। तत्र सिन्ध्वादिगणेऽपि पठितः कम्बोजः ( पा० सू० ४. ३. ९३. )। गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना ( १. १. ३४ )। महाभारतेऽपि वर्णितौ काम्बोजबाह्लीकौ ( द्रो० प० ११७, १५५ अ० )।

अथ भगवता यास्केनापि "कम्बोजाः कम्बलभोजाः कमनीय-भोजा वा ; कम्बलः कमनीयो भवति"-इति कम्बोजशब्दो निरुक्तः ( २. १. ४. )। "प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"-इत्याद्युक्त्वा तदुदाहरणाय प्रोक्तं चैतत्— "शवतिर्गतिकर्मा कम्बो-जेष्वेव भाष्यते ०—० विकार मस्यार्येषु भाषन्ते शव इति ; दाति-र्लवनार्थे प्राच्येषु, दात्र मुदीच्येषु"-इति ( २. १. ६, ४. )। पातञ्जले महाभाष्ये पस्पशाया मप्येव मेव।

अपि तत्र आर्यावर्त्तस्य चतुःसीमनिरूपणं [illegible]। तथाहि—"कः पुनरार्यावर्त्तः? प्रागादर्शात्, प्रत्यक् कालकवनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्"—इति २. ४. १० म० भा०। अत्राह तट्टीकाकारः कैयटः—"आदर्शादयः पर्वत-विशेषाः"—इत्येव। "जनपदतदवध्योश्च (पा० सू० ४. २. १२४.)"—इतिसूत्रस्योदाहरणभूतं यदिदं मादर्शक इति पदं [illegible], इतोऽपि ज्ञायते यत्त्वादर्शनामा कश्चित् सीमपर्वत इति। सोऽयम् आदर्शः स्यादञ्जनपर्वतः; तत्पदनिरुक्तिस्तथैवावगतेः। स चेदानीं सुलेमानित्युच्यते। स हि शतपथब्राह्मणमुक्तश्वेतगिरेरेव दक्षि-णांशः। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिर्वादर्शो वार्या-वर्त्तस्य पश्चिमसीमेत्यनुमानमपि न स्यादसङ्गतम्। तदानीन्त-नार्यावर्त्तस्य पूर्वसीमभूतं कालकवनं तु स्यात् धर्मारण्यतः प्राग्-विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं वक्सर-(बक्सर)-प्रदेशीयं ताड़कावनम्। पुरासीत् तद्धि कालयवनाश्रितम्; तत्प्रभृत्येव तस्य कालवनं कालकावनं चेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य विष्णुपुराणोक्तस्य च (५. २३. ५.) तस्य कालयवनस्य मगध-राजजरासिन्धुमित्रत्वेन वर्णनात् कालवनमगधयोः सामीप्यानुमानं स्याच्च सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोक्तेरपि तद्धेतस्य पतञ्जलेः सङ्गच्छते। तथाहि—"हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु; गमिमेव त्वार्याः प्रयुञ्जते"—इति (म० भा० पस्पशा०)। तदेवं तदापि सौराष्ट्रजनपदस्य, तदे-दानीं पटनेत्यादिप्रसिद्धानां प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो बहिः स्थितिरासीदित्यत्र च नास्ति संशयलेशो-ऽपीति।

अथात्र भगवान् मनुस्त्वाह—"आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः" –इति (२, २२.)। 'तयोः गिर्योः' पूर्वापरान्तयोः हिमवद्विन्ध्ययोः। तदित्थं पूर्वापरसमुद्रव्याप्येव देशो मनोः सम्मतः। तत्र पूर्वः स्यात् सिन्धुसागरसङ्गमः, अपरस्तु गङ्गासागरसङ्गमः। स एष आर्यावर्त्तः ब्रह्मावर्त्तप्रदेशो ब्रह्मर्षिदेशो मध्यदेशो यज्ञिय देशश्चेति चतुर्विधत्वेन वर्णितस्तेन तत्प्रान्तभूमीनां म्लेच्छभूत्व मुररीकृतञ्च। तद्यथा—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥
कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः"–इति
(म० २अ० १७, १८, २१, २३श्लो०)।

अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्ह-भूमय एव, तत्र नास्ति विचारणा; निर्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धुसौवीरकाश्यादयो देशा अपि यज्ञानुष्ठानार्ह-भूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्मादार्यावर्त्ताद् बहिःस्थिताः "किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः। आन्ध्रा दक्षिणतो वीर! तुरस्कास्त्वपि चोत्तरे"–इति (वा० पु० १३. ४०), एव-मादिकाः खोरासान-तुरस्क-पूर्वबङ्गोत्तरबङ्गान्ध्रप्रदेशादयोऽस्यार्या-वर्त्तस्य प्रान्तभूमयः सर्वाः एव म्लेच्छदेशाः; किञ्चार्यावर्त्तान्तर्गता

दक्षिणवङ्गाङ्गप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेनायज्ञियत्वात् म्लेच्छदेशा एव ।

तत्वतस्तु "तयोरेवान्तरं गिर्योः"-इति मनूक्तेः पूर्वस्यां यावदेव विन्ध्यगिरेः प्रसृतिस्तावदेव यज्ञिय आर्यावर्त्त स्वीकार्यः, ततो बहिरार्यावर्त्तत्वेऽपि न त्वस्ति यज्ञियत्व मिति म्लेच्छभूत्व मेव । अत एवाङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च गमननिषेधः सङ्गच्छते; सूचितश्चैतदत्र मनुनैव "एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः"-इति (२. २४.)। 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः । तथैषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्येत । एतर्ह्यपि प्राच्यमगधेषु पटनाप्रभृतिषु, अङ्गप्रदेशेषु भागलपुरादिषु चान्यत आगताः शाकलद्वीपिब्राह्मणाः, तथा वङ्गेष्वत्र कान्यकुब्जादागता एव ब्राह्मणा राढि वारेन्द्र वैदिका इति ख्याता वसन्ति, कलिङ्गसौराष्ट्रीयैरपि तथैव ।

कलिङ्गप्रदेशागम्यत्वं तु पाणिनिसूत्रे तद्वार्त्तिकतद्भाष्येभ्यश्चावगम्यते । तथाहि— अस्ति पाणिनेरेकं सूत्रं "परोक्षे लिट्"-इति (३. २. ११५), अत्र चास्ति कात्यायनवार्त्तिक मिदम्— "अत्यन्तापह्नवे च"-इति, लिट् वक्तव्य इति शेषः, उदाहरणञ्चास्य दर्शितं पतञ्जलिना— "नो कलिङ्गान् जगाम"-इति विवृतं च तत् कैयटेन— "न केवलं तद्देशस्य भोजनादेरपह्नवो यावत् तद्देशगमनादेरपि"-इत्यादि । एष च कलिङ्गप्रदेशोऽस्याप्यार्यावर्त्तादहिरेव संस्थितो मेदिनीपुरादारभ्य तैलङ्गदेशान्तं यावद् विस्तृतः । पुरा आसीदयं मुत्कलिङ्ग मध्यकलिङ्ग-कलिङ्गेति त्रिधा विभक्त इति त्रिकलिङ्गनामा । तैलिङ्गनाम तु तत एव समुद्भूतम्, अप्युत्कलिङ्गत एवोत्कलनामप्रसिद्धिरित्याहुरैतिह्य-

सिकाः । अतएव श्रौते वर्णविचाराभावस्तद्दोषनिवृत्तये चोत्तरत्र समये केनचिदुत्कलखण्डप्रणयनञ्चेति सम्भाव्यते ।

अथामरसिंहोऽपि प्राच्योदीच्यमध्यम्लेच्छेति चतुर्विभक्त मार्यावर्त्तदेशसंस्थान मश्लोकयत् । तद्यथा—"आर्य्यावर्त्तः पुण्यभूमि-र्मध्यं विन्ध्यहिमालयोः"—इति (२. १. ८.)। तत्र "शरावत्यास्तु योऽवधेः । देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः । प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः" इति (२. १. ६, ७.)। प्राक्सहितो दक्षिणो देशः 'प्राग्दक्षिणः', एवं पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः', अन्तं प्रति गतः 'प्रत्यन्तः' सीमान्तप्रदेशः ॥

अथात्र युरोपीयभ्रातरः केचन सम्प्रवदन्ते । श्रूयते हि ऋक्संहितायाम्—"अनु प्रत्नस्यौकसो हुवे"—इति (१. ३०. ९.), तेनाधिगम्यते सारस्वतप्रदेशीयार्याणा मादिपुरुषाणां वास आसीत् पुरा क्वचिदन्यत्रैवेति । तच्चार्याणा मादिनिकेतन मस्यैवासिया-खण्डस्य मध्यभागस्थितयोर्बलुर्ताग्मुस्ताग्पर्वतयोः पश्चिमपार्श्व-गताधित्यका भूमिस्तत एव विकीर्णा वयं भारतीयाः पारसिकाः शर्म्मण्यादयश्च समभवामेति । अत्र ब्रूमः । भारतीयपारसीकशर्म्मण्यादीना मार्यमूलत्वेनैकजातिप्रभवत्वन्तु स्यात् स्वीकार्य्यम्, किन्त्वन्यद्वीपनिवेशिका वय मिति नैव मन्यामहे वयम्; स्वदेश-स्वत्वहान्यादिदोषत्रयप्रसङ्गात्, तेषां तन्मतपोषकप्रमाणहेतूना मतिदौर्बल्याच्च ।

ते त्रयो दोषाः प्रदर्श्यन्ते—नैष देशोऽस्माकं पैतृकोऽपि तु यथा-भवद्यवनाना मधिकृतोऽद्य चेंग्लण्डीयानाम्, तथैव पुराऽस्मत्पूर्वपुरुषै-रत्रत्याननार्यान् विजित्य बलाद् गृहीत इति । एतेनास्मिन्

आगन्तु स प्रवादस्तेन किम्, तथा स्वीकारेऽपि न भवेदस्माकं भूस्वत्वनाशः, आर्यावर्त्तस्यास्य एशियाखण्डीयभूभागत्वात्; निरवसिताश्चास्माद् विश्वामित्रर्षिपुत्रादयः। तथाहि—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"-इति (ऐ० ब्रा० ७. ३. ६.)। अतएव त्वग्दोषदुष्टा भर्त्तृपरित्यक्ता अत्रिसुता विदुष्यपालैव ग्रीकदेशीया अपेलो देवतेति सम्भाव्यते। तदत्र ऋ० सं० ८. ९१ सूक्तव्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम्।

(२) भारतीयपारसिकग्रीकलण्डीयादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शीतर्त्तु-नामैकविध मेव प्रायः, तस्माच्चावगम्यते सर्वेषा मेवैषा मेकवंश-प्रभवत्वं शीतप्रधानवासित्वञ्चेति तेषां तादृशानुमानग्रहस्य द्वितीय-हेतुवर्णनम्। अत्र ब्रूमः—अस्त्वेषा मेकवंशप्रभवत्वम्, अपि स्वीकार्यञ्च स्यात् पुरासीदेषां सर्वेषा मेव हिमप्रधानैकदेशवासित्वञ्च, तेन किम्? शीतप्रधाने तस्मिन् सुमेरुप्रदेशे हि तेषां मुख्य-सर्वजातिमूलार्याणां वासस्वीकारेऽपि किं मेतन्नोपपद्यते? उप-पद्यत इति चेत् अलं कल्पनाकल्पितजल्पनयेति। अपि पार-सिकावेस्ताग्रन्थस्य 'वेन्दिदाद्'-प्रकरणीयाद्याध्याये 'हरख्वइति'-नामकस्यैकस्याभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नून मेतस्य सारस्वतप्रदेशस्यैव; 'सरस्वती'-शब्दस्यैव हि पारसिक-भाषायां 'हरख्वइति'-व्यवहारः सर्वसम्मतः, सिद्धान्तितश्च तथा ह्याग् महोदयेनापि (१८९२ खृ. सु. व्या. ५६-५८ पृ०)।

(३) तत्रैव 'अवस्ता'ग्रन्थस्य 'वेन्दिदाद्'-प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्य्यनम्वैजो'-नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते। हिमर्त्तु-

प्रधानश्च स इति चोल्लिखितं तत्रैव। स एव जनपदः पारसि-
कानामादिवासस्थः स्यात्, स्वीक्रियते च तथा तैः पारसिकैः।
भारतीयपारसिकयोर्वैदिकमन्त्रसाम्यात् भाषासादृश्यात्, अग्नि-
पूजकत्वसाम्याच्चैकमूलप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणा मेषा-
वासभूमिः स्यात् स एव 'ऐर्यनम्वेजो' जनपद इति तत्र क्लृप्तीय-
हेतुवर्णनम्। अत्र ब्रूमः—अस्तु पारसिकाना मार्यवंशसमुत्पन्न-
त्वेनाक्लृप्तत्वम्, स्याच्च स्वीकार्यं तेषा मादिपुरुषाणा मैर्यनम्-
वेजोवासित्वम्; न तथाप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्;
राजाज्ञादिभिरन्यदेशतो विताड़ितानां तदादिपुरुषमात्राणां तथा-
त्वसम्भवात्। एकवंशप्रभवाना मपि हि पूर्वपुरुषाणां नानाहेतुतो
नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित् स्वदेश-
वासित्व मपीति सुवच मेव। अपि वा राजतरङ्गिणीवर्णित
'आर्याणक' देश एव 'ऐर्यनम्वेजो'-इति पारसिकनामभागासीत्,
स च स्यात् केषाञ्चिदार्याणां वासभूमिः, पारसिकानाञ्चापि
तेभ्य एवोत्पत्तिः स्वीकार्येति सर्व मनवद्यम्। स च देशः
काश्मीरादुत्तरो हिमप्रधानोऽप्यार्यावर्त्तान्तर्गत एव। तथाहि
(रा० त० ४. १६७)—

"तुषारवर्षैर्बहुलैस्तमकाण्डनिपातिभिः।
आर्याणकाभिधे देशे विपन्नं कैश्चिदूचिरे"—इति।

वस्तुतस्तु ऐर्यनम्वेजोनाम नगरं नाद्य क्वचिदपि केनाप्युप-
लभ्यते, पुरा क्वासीत् तस्य विद्यमानत्वमपि नाद्य यावत् सुनिर्णी-
तम्; तदलं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैव मपि प्रवादः—ग्रीक्रोमकजाति-पूर्वपुरुषाः
पूर्वोत्तरदेशतः प्रोषिता इताल्यादौ न्यवात्सुरिति। स एव प्रवाद-

स्तदैव सङ्गच्छेत, यदि नामाभियायखण्डस्य मध्यभूमिरेव तेषा माद्या-र्य्याणां निकेतनं मन्येतेति तत्र चतुर्थहेतुवर्णनम्। अत्र ब्रूमः— पूर्ववर्णितः सुवास्त्वादिप्रदेशोऽपीतात्यादिभ्यः किञ्चिदुत्तरगतपूर्व एवेति तत्प्रवादोपपत्तिः समानैवेति।

(५) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकातीतमहिमा-न्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनाना मार्य्याणां स्वीकारात् तादृश-स्थानस्थैतदादिपुरुषाणां वासः सम्भाव्यत इति तत्र पञ्चमहेतुवर्ण-नम्। अत्र ब्रूमः— हिमवद्दक्षिणभागस्था आर्याः तपस्साधनादिकं चिकीर्षवश्चिरमेव हिमवदुत्तरभागं गत्वा क्षतकृत्या भवन्ति, इत एव तस्य पवित्रतमत्वेन वर्णनम्; न त्वादिपितृवासनिबन्धन मिति। लोकातीतमहिमान्वितत्वन्तु तत्रत्यकुरूणा मजेयत्वादिश्रवणात एव। हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्; उत्तरशब्दमात्र तद्वीजम्। "उत्तरः = उन्नततरो भवति, अधरः = अधो रः, अधो न धावतीत्यूर्ध्वगति' प्रतिषिद्धा"—इति यास्कः (निरु० २. ३. २.)। तथाचोर्द्ध्वतनप्रदेश एवोत्तरः। आर्य्यावर्त्तस्य यस्यां दिशि उन्नत ऊर्द्ध्वतनो हिमवान् पर्वतो विद्यते, सैव दिगुत्तरेति व्यपदिश्यते, ततो विपरीता अधरेति। अत एवैवं श्रूयते—"स उत्तरस्मादधरं समुद्र मपो दिव्या असृजद्वर्ष्या अभि"-इति (ऋ० सं १०. ९८. ५.)। अत एव सूर्य्योऽप्युत्तर उच्यते। तथाच ऋक्संहितायां सम-ाम्नातम्—"विश्वस्मादिन्द्र उत्तरः" इति (ऋ० सं० १०. ८६. १-२३.)। एवं मन्यतान्यत्र च बहुत्रैव।

(६) श्रूयते हि कौषीतकिब्राह्मणे "उदीच्यां दिशि प्रज्ञात-तरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं, यो वा तत आगच्छति, तस्य वा शुश्रूषन्त इति ह स्माहैषा हि वाचो दिक्

तत्तत्तत्त्वप्रदर्शिनौ चैव मन्त्रः पुनर्जन्मविषयो न तूषसो दैर्घ्यमावेदति ; तत् पश्यत्वेतत्पूर्वमन्त्रावेतौ—

"पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः । जन्मान्यवरैः पराणि ।

वेदानि देवा अयमस्मीति माम् ।

अहं हित्वा शरीरं जरसः परस्तात्"-इत्येकः,

अथापरः— "प्राणापानौ चक्षुः श्रोत्रम् । वाचं मनसि संभृताम् । हित्वा शरीरं जरसः परस्तात् । आ भूतिं भूतिं वयमश्नवामहै" -इत्यतस्तृतीय एवैष यः प्रदर्शितपूर्वः । तथा च पूर्वजन्मनि दृष्टा एवैमा उषस इत्येव तत्फलितार्थः सम्पद्यते । एवञ्च न कथमप्येष मन्त्रः सुमेरुप्रदेशीयोषसो बहुदिनव्यापित्वे प्रमाणं भवितुमर्हतीति स्फुटम् । किञ्च तत्रत्योषसो बहुदिनव्यापित्वे तत्रत्यानां कथं भेदधिगमस्तस्य मित्यपि विचार्यमेव ॥

यदप्युक्तं सूर्यस्य उषसश्च सुमेरौ दक्षिणोदयदर्शनादेव "पुनश्चरति दक्षिणायाः ( ऋ० मं० ३.५८.१. )"-इति दक्षिणापुरस्त्वव्यपदेशोऽपीति । तदेतत् समग्रं प्रमाणमपि अज्ञमानस्य वच-मानवशावलम्बन मिथ्याकिञ्चित्करम् । उत्तरः—ऊर्ध्वस्थः सूर्यः, दक्षिणा—अधःस्था पृथिवी, इत्येव सर्वत्र ज्ञेयम् । सुमेरुवासिनां तु येयं दिगस्माकं पश्चिमा, सैव स्याद् दक्षिणा ; यस्यां दिशि सूर्योदयस्तस्या एव प्राक्त्वनियमात् । पुरः पुरस्तात्, प्राक्, पूर्वेत्यभिधार्थाः ; सूर्योदयास्तनिबन्धन एवात्र भवत्यस्माकं दिग्-व्यवहारः प्राक्पश्चगुदगवाग्विभागीति । श्रुतिसिद्धं ( ऐ० ब्रा० १. ४. १. ) युक्तिगम्यञ्चैतत् किं तेन स्वमतप्रतिपादनव्यग्रतया विस्मृतमपि वा हठैकपरतया अस्माकं चक्षुःषु धूलिमुष्टिप्रक्षेपायोद्युक्त इति सुज्ञायितुं शक्तिमिति विचारयन्तु धीमन्त एव ॥

अहो चित्र मिदम्! "सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्" -इति कुमारसम्भवस्थं कोऽपि तेन स्वाभिमतप्रमाणत्वेनोपन्यस्तः, तत् किं मध्ययुगीयस्य "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः"-इतिवादिनः कालिदासस्यापि सुमेरुस्थत्वं मन्तव्यम्? तदिदं तदीय मष्टमं प्रमाण मत्यन्तमेव विस्मापयतीत्यत्र मौनावलम्बन मेव श्रेयः॥

"दीर्घतमा मामतेयः"-इत्येतदनुसारेण 'दीर्घतमाः'-इति सञ्ज्ञा नवम मपि स्वमतप्रमाण ममानि तेन। तदिदं तदीयं नवमं प्रमाणम्। वस्तुतो वेदार्थमीमांसकप्रयोजनस्य मीमांसादर्शनस्य मते दीर्घतमा इति हि प्रावाहणिरितिवत् कल्पितं नाम; यः खलु ममताप्रसूतः, स नूनं दीर्घतमास्तत्र कः सन्देहः। द्रष्टव्यश्चैष सिद्धान्तो मी० द० १.१, २८--३२ सूत्रभाष्ये॥

यदपि निर्णीतम्,— वैदिकमन्त्रेषु 'नवग्वाः'-इतिपदस्वारस्यात् नवमासात्मको वर्षः 'दशग्वाः'-इतिपदस्वारस्याद् दशमासात्मको वर्षश्च गम्यते, तादृशवर्षो नास्मत्प्रदेशेष्विति नूनं सुमेरुप्रदेशीय एव वर्षो वर्णित इति स्वीकार्य मित्य मपि सिध्यति तस्यार्यादिवासभूमित्वमिति। तदिदं दशमं प्रमाण मपि निर्बीज मेव। अत्र हि बह्व्यः पृच्छाः समुत्थीयन्ते। तद्यथा— सुमेरुप्रदेशे किमद्यापि नवमासात्मकोऽब्दः प्रचलितो विद्यते? उत दशमासात्मकः? आद्यश्चेत् दशग्वशब्दस्य का गतिः? द्वितीयश्चेदाद्यस्य का गतिः? उभयविधाब्दस्तत्राद्यापि भवतीति चेत्, कथं तयोरेकत्र समावेशः? यथास्मद्देशेष्वत्र भूभ्रमणजन्य मब्दपरिगणनं भवति, तथा तत्र तत् किन्निबन्धनम्? अस्मदब्द एव तेषा मेकदिनम्, तादृशकतिदिनात्मकः को मासः? तादृशकतिमासात्मकश्चाब्दः? तादृश-

प्लवनम्। तदेतत्पर्यालोचनया गम्यते— कदाप्येकदा पञ्चनद-जलप्लावनेऽस्मादेवार्यावर्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालय-शृङ्गाधिरोहणम्, उपशान्ते च तदुपद्रवे ततः क्रमादभिसर्पणञ्चेति-वेत्यस्मन्मतानुकूलैवैषा श्रुतिरिति। अत एव 'अतिदुद्राव'-इति पदस्य 'अधिजगाम'-इत्यर्थः कृतस्तत्र भाष्यकृता हरिस्वामिना। वेदार्थनिर्णयायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थेऽतिशब्दो निर्णीतः— "अति सु इत्यभिपूजिते"-इति (१. १. ५.)। 'अतिधनः'-इति, 'सुब्राह्मणः' इति च तदुदाहरणद्वयम्। अति-शयोऽप्यर्थोऽप्यस्यान्तर्यास्कीयः। अत एव "अतिमृत्युमेति"-इत्यादौ (श्वेता० उ० ६. १५.) अतिशयोऽर्थ एव प्रतीयते, नोल्लङ्घनार्थः। "अतिरतिक्रमणे च"-इति पाणिनिसूत्रस्य (१. ४. ९५.) व्याख्यायां ह्याहैव ज्ञानेन्द्रसरस्वती— "अतिक्रमणमुचितादधिक-स्यानुष्ठानम्"-इति। अथ वा 'तुष्यतु दुर्जनः'-इति न्यायादते-रुल्लङ्घनार्थत्वस्वीकारेऽपि हिमालयोत्तरवासिनां तेषां दृश्यस्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेत्? अपि हिमालयोत्तर-प्रदेशेषु आसिया-मध्यभूखण्डेषु न कदाप्यासीत्समुद्रो नैवाद्यापि दृश्यते, तत् कथं शिरो नास्ति शिरोव्यथेतिवत् समपर्यायार्णवजल-स्फीतिवर्णनं सङ्गच्छतेति च विचार्यमेव। आसीत् पुरोदीच्या-मपि समुद्र इति चेद् वेदेषु प्रायः सर्वत्रैव समुद्रोल्लेखकाले तथाविधसमुद्रस्यानुल्लेखः कथङ्कारमुपयुज्यत इति च ध्येयमिति॥

एवं सुमेरुप्रदेशवासिनः खल्वस्मत्पूर्वपुरुषा इति बाह्य-सिद्धान्तोऽपि स्याद् भ्रान्तसिद्धान्त एव। तथाहि—

उत्तरमेरुप्रदेश एवास्मत्पूर्वपुरुषाणामार्याणामासीद् वासस्थभूमिरिति प्रमाणयितुं तैस्तु निःप्रमाणोऽपि वागाडम्बरो बहु-

पन्यस्तः; तत्र प्रमाणपरतन्त्राणां मौन मेव श्रेयः; ततो यानि तु श्रुतिवचनादीनि प्रमाणत्वेनोपन्यस्तानि, तत्रेदं प्रथमं मन्यामहे वयम्— "अमी य ऋक्षा निहितास उच्चा,

नक्तं ददृश्रे कुहचिद् दिवेयुः।

अदब्धानि वरुणस्य व्रतानि,

विचाकशच्चन्द्रमा नक्तमेति॥"–इति ऋ० १.२४.१०।

तत्रत्यतोऽस्यार्थः—'अमी' 'ये' 'ऋक्षाः' सप्तर्षयः 'उच्चा' उच्चैः शिरःप्रदेशे 'निहितासः' स्थापिताः, सृष्टिकर्त्रेति शेषः। ते 'नक्तं' रात्रौ 'ददृश्रे' दृश्यन्ते 'दिवा' 'कुहचित्' 'ईयुः' गच्छेयुः, न दृश्यन्त इति यावत्। 'चन्द्रमाः' अपि 'नक्तम्' एव 'विचाकशत्' प्रदीप्यमानः 'एति' दृश्यत इति भावः। तदेतद्दिवसादीनि 'वरुणस्य' राज्ञः 'अदब्धानि' कदाप्यविनाश्यानि 'व्रतानि' कर्माणि, धैर्याणीति। एवञ्च शिरःप्रदेशे सप्तर्षिमण्डलावस्थानं गम्यते, तच्च सुमेरावेवोपपद्यते; अत एतादृशमन्त्रद्रष्टृणा माध्यर्षीणा मासीत् पुरा तत्रैवावास इति तदभिप्रायः। वयन्तु ब्रूमः— यास्कमते ऋक्षा इति पदेनेह सर्वेषा मेव नक्षत्राणां ग्रहण मिष्टम् (नि० ३.२०); सर्वेषा मेव तेषां रात्रावेव द्योतमानत्वात् सुसङ्गच्छत एवात्र यास्कस्य तन्मतम्। अपि सुमेरुप्रदेशतो नक्षत्राणि उच्चैर्दृश्यमानानि, इतोऽपि उच्चैरेव दृश्यमानानि, कुमेरुतोऽपि तानि उच्चैरेव दृश्यमानानीति तेषा मुच्चैःस्थत्वं सर्वत्र प्रत्यक्षम्, किं सुमेरुत एव। न मूर्ध्नः पदेन म स्तकोपरि वर्तमानं मध्यमानं वा गम्यते। यच्चोक्तं शतपथब्राह्मणे (२.१.२.४.) ऋक्षशब्द सप्तर्षिवाचकोऽपि; तत्रापि न नः क्षतिः। "उत्तरम्, उत्ततरम्"–इत्यादि-मैत्रायणीवाक्यात् (२.७.२.) उत्तरदिङ्निबन्धन मेवोत्तरनामव्यपदेश

दृश्यमानत्वात् इत्येवं वेदस्य तेन सप्तर्षिपदेन उत्तरस्यामित्येवार्थः कल्प्यते; अतश्च तत् तत्रैव शतपथे तदनुपदम् – "उत्तरा हि सप्तर्षय उद्यन्ति"–इति। तदित्थं तत्प्रदर्शित एव मन्त्रस्तन्मतसमुच्छेदको भवितुमर्हति न वेति सुधीभिरेवाकलय्यम्।

वस्तुत एष मन्त्रो वरुणविज्ञानपरस्ततो वरुणकर्मपरिचायक एव प्रतीयते; तस्माद् वरुणपदार्थबोधाय विलीयत एवैतद्वालविजृम्भितं समन्तात्। तथाहि– "रात्रिर्वरुणः"–इतिश्रुतेः (ऐ० ब्रा० ४. २. ४.) वरुणस्य रात्रिदेवत्वम्; निघण्टौ द्वादशादित्यनामप्रक्रमे वरुणशब्दपाठात् सूर्यविशेषत्वम्; "येना पावक चक्षसा•—•पश्यन् जनानि सूर्य"–इतिस्वोदाहृतश्रुतिव्याख्यानेन भगवता यास्केन तदेव प्रतिपादितञ्च (१२. ३. ८.); एवं हि रात्रिकालिकोऽधःस्थः सूर्य एव वरुण इति प्रतिपद्यते। एवं वरुणार्थस्वीकारेणैवोपपद्यते वरुणराजकर्तृकः सप्तर्षिप्रभृतीनां चन्द्रमसश्च प्रकाशः। परं न चैतद् वचः सङ्गच्छते मेरुप्रदेशवासिनाम्; तत्र सूर्यविशेषस्य वरुणस्य तदधःस्थत्वेन चन्द्रमःप्रभृतीनां प्रकाशकत्वासम्भवात्, प्रत्युत आर्यावर्त्तवासिनामेव सङ्गच्छते; अतस्तत्प्रदर्शितोऽप्येष मन्त्रोऽस्मन्मतपोषक एवेति ध्रुवम्। एवमपि स्वमतप्रमाणतयास्योपन्यासो नूनं नूतनमतप्रकाशव्यग्रमानसस्य तस्य, सुदीर्घप्रान्तरमध्यापतितस्य क्षुत्तृट्-क्षामस्य कुरङ्गशावस्य मरीचिकादिग्भ्रम इवेति॥

तद्द्वितीयप्रमाणमप्येवमेव। तथाहि—

पञ्चैकमष्टादशकं सूर्यसुषाम सूक्तम् (ऋ० सं० १०. ८९.)। तस्य द्वितीयस्या ऋचः प्रथमार्द्ध एषः—

"स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा"–इति।

इम मेव मन्त्रांश मवलम्ब्य सुमेरोराधाराधेयावासभूतत्वं प्रमाणयितुं चेष्टितं तेन। तदुक्तम्—मस्तकोपरि रथचक्राकारेण नक्षत्राणां भ्रमणं तत्स्थाना मेव सम्भवतीति। वस्तुतस्तन्मन्त्रस्य व्याख्यानालोचनतो न तादृशतच्छायापि गम्यते; प्रत्युत तन्मतविपरीतं यत् सत्यं तदेव प्रमाणितं भवति। तद्यथा —'इन्द्रः' परमैश्वर्यादिगुणयुक्तः 'सः' 'सूर्यः' 'उरु' उरौ विस्तीर्णान्तरिक्षे 'वरांसि' पृथिव्यादिग्रहोपग्रहमण्डलानि 'आवहत्यात्' सदेव आवर्त्तयति। तत्र दृष्टान्तः—'रथ्या चक्रा इव' यथा अश्वः मध्यस्थः सन् रथसम्बन्धीनि चक्राणि भ्रामयति, चक्राणाः मितस्ततोविक्षिप्तपतनतो रक्षयति च तद्वदिति। एतेन मध्यस्थितसूर्याकर्षणशक्तितः सर्वेषां ग्रहोपग्रहाणा मितस्ततोविक्षिप्तपतनराहित्यं भ्रमणञ्चेति विज्ञान मुपदिष्टं भवति। शालमतं तु तेषां मस्तकोपरि सूर्यस्याविद्यमानत्वादवकल्पत्वेन सूर्यस्य मध्यस्थितित्वं कथं सङ्गच्छेतेति पक्षपातशून्याः सुधिय एव विभावयन्तु; सुव्यक्त मपि श्रुत मन्त्ररूपेण सूर्यस्य स्थितिवर्णनं तदुक्तत्र—

"यो अक्षेणेव चक्रिया शचीभिर्
विष्वक् तस्तम्भ पृथिवी मुत द्याम्"—इति।

पदार्थः।—'यः' सूर्यः 'शचीभिः' आकर्षणक्रियाभिः 'पृथिवीम्' स्वनीचैःस्थितां भूमिम्, ग्रहमण्डलनिम्नार्द्धभागगता मिति भावः; 'उत' अपि 'द्याम्' स्वोर्द्ध्वैःस्थितां सुतरां द्युस्थाम्, ग्रहमण्डलोर्द्ध्वभागगता मिति भावः; 'विष्वक्' सर्वतः 'तस्तम्भ' स्तम्भन् वर्त्तते। तस्तम्भेति "छन्दसि लुङ्लङ्लिटः"—इति सार्वकालिको लिट्। तादृशस्तम्भनेन ग्रहाणा मितस्ततः पतनजन्यं कक्षाच्यवनं वारितं भवति। अत्र दृष्टान्तः—"अक्षेणेव चक्रिया"—इति। 'चक्रिया'

...त्वमिश्चे, ... निन्बोइ प्राप्ती यथा 'मयेव' ... लोके, तद्वदिति ॥

तत्तृतीयप्रमाणन्तु स्वसिद्धान्ताघातमेव न सहते, किन्तुन: स्वक-सिद्धान्तावातम्। तथाहि— यदिदं श्रूयते सप्तविधसोमयागेषु अग्निष्टोमादिषु प्रातरनुवाकविधावैतरेयके— "प्रातर्वै स तं देवेभ्यो ऽब्रवीत्"–इत्यादि (२. २. ५.)। एतया श्रुत्या प्रातरनुवाक-पाठस्य प्रातरेव कालो व्यञ्जीकृत:। ततस्तदुत्तरत्र प्रातरनुवाकस्य संख्याविधौ श्रूयते— "सहस्र मनूच्यं स्वर्गकामस्य"–इत्यादि पक्षान्तरत्वेन। स एष: सहस्रर्चो पाठ: प्रातरुष:काले कथं निर्वाह्यितुं सम्भाव्येत? सुमेरुप्रदेशे तु सम्भाव्यते; तत्रोषसो मास-द्वयव्यापित्वात्। तदित्थं श्रुवसि सहस्रर्चानां पाठविधानं गमयत्ये-वाचार्याणां दीर्घोषसे सुमेरौ तदानीं मासीद् वास इति।

अत्र ब्रूम:– नैष: प्रातरनुवाकविधि: क्वचिदृक्संहितायां श्रुत:, अपि श्रूयते ब्राह्मणे ऽैतरेयके, तत् किमिदमैतरेयकमपि तत्रैव प्रोक्तम्? तथा स्वीकारे यदिदं श्रूयते ऽैतरेये— "ध्रुवायां मध्य-मायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजान:"–इत्यादि (३८पृ० ६पं०), तत् कथं सङ्गच्छेत? किञ्च यदि प्रातरनुवाक-पाठस्य कालो द्विमासात्मको मन्येत, तर्हि प्रातस्सवनमाध्यन्दिन-सवनतृतीयसवनानां काला: कीदृशा मन्तव्या:? संवत्सरसत्रकालश्च कीदृश:? इत्यादि च तेन निरूपणीय एव। अथापरम्, यदि दीर्घोषसे सुमेरावेव प्रातरनुवाकपाठसम्भव इति मन्येत, तर्हि युधिष्ठिरादिभिर्वाजिरावान्तैरार्यावर्तवासिभिरनुष्ठितेष्वश्वमेधादिषु सोमयागेषु प्रातरनुवाकानां पाठो न बभूवेति किं मन्तव्यम्?

अन्यच; यथा ...वार्षिकसत्रस्यासम्भवता मा... मीमांसायां

मधिकरण मारभ्य सिद्धान्तितम्, तथैवोषसि सहस्रसङ्ख्यकानामृचां पाठोऽसम्भव इति किं नात्र विचारित मित्यपि विचार्य्यमेवेति।

वस्तुतस्तु "महति रात्र्या अनूच्यः पुरा शकुनिवादात्"-इत्येव विधिः। 'रात्र्याः' पूर्वस्यौपवसथ्याख्यस्य दिनस्य अग्निष्टोमीयपश्वनुष्ठानयुक्तस्य या रात्रिः तस्या रात्रेः सम्बन्धिनि शेषे महति अवतिष्ठमाने सति प्रातरनुवाकाख्यानामृचां पाठ आरब्धव्यः, 'शकुनिवादात्' शकुनयः पक्षिणः, ते यस्मिन्नुषःकाले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति, ततः 'पुरा' पूर्व मेव तत्पाठः समाप्य इत्यर्थः। अत्राह सायणः—"एतदुक्तं भवति, यस्मिन् काले प्रारब्धः प्रातरनुवाकः तमसोपघातात् पुरैव समापयितुं शक्यः स्यात्, तदा प्रारब्धव्यः"-इति (२. २. ५.)। अवश्यपाठ्य-प्रातरनुवाकस्य सङ्ख्या त्वेकविंशतिरेव (ऐ० ब्रा० २. २. ६.); काम्यपाठ्यस्य तु शतादिका सहस्रान्ता। तदत्रावश्यपाठ्यानामृचां पाठस्तु प्रातरेव नूनं सम्पद्यत इति प्रातरनुवाकनाम-करण मुपपद्यत एव। काम्यपाठ्यानां शतादिसहस्रान्तानामृचां पाठस्तूषस्यसम्भव इत्येव "महति रात्र्या अनूच्यः"-इति विधिः। सहस्रप्रातरनुवाकीयासु ऋक्षु एकपदादीना मप्यस्ति विद्यमानता, न वाप्यस्तासां पाठे विशेषविलम्बश्च सम्भवति; अतो रात्र्या महति भागेऽवशिष्टे आरब्धः प्रातरनुवाकपाठः शकुनिवादात् पुरा समाप्यो भवेत्, किं तत्र चित्रम्? किञ्च सहस्रर्क्-पाठपक्षे "पुरा शकुनिवादात्"-इति नियमाभावश्च। अत एवेद मपि श्रुतं तत्र तदुत्तरम्—"अपरिमित मनूच्यम्"-इति (२. २. ७.)। "शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य मध्यरात्रादूर्द्ध मुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तुं

अग्निरस्मि तावतीरनुब्रूयात्"-इति तत्र सायणभाष्यम्। एतेन सहस्रानुवचनपक्षे परा अनुनिशादादिति नियमो परित्याज्य इति स्फुटम्। अप्यस्मा? 'शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य'-इत्यस्य स्थाने 'सहस्रं सङ्ख्यापरिमाणं परित्यज्य'-इत्येव मन्तव्यम्; सहस्रपाठमात्रस्य छान्दसत्वाभ्यतया तत्रैवापरिमित-पाठव्यवस्थाया औचित्यादिति।

अस्ति चान्यच प्रातरनुवाकस्य सन्दिग्धपाठ्यत्वश्रुतिः— "उदित आदित्ये प्रातरनुवाक मनुब्रूयात्; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"-इति (ऐ० ब्रा० ४. ३. ४.)। काम्ये बहुसङ्ख्याकर्चां पाठपक्षे एतदपि स्याच्छ्रवणम्; नित्यपाठ्यानां प्रातरनुवाकर्चां मत्वल्पसङ्ख्यात्वेन प्रातःपाठस्य वश्यंभावित्वात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति विचार्य मेतत् सुधीभिरिति॥

उषोदीर्घत्वशब्दपरं तदीयवचनं प्रमाण मन्यकिञ्चित्करम्। तथाहि— "स क्षपः परिषस्वजे"-इति (ऋ० सं० ८. ४१. ३.) मन्त्रे श्रुतं 'तस्य वेनीरनु व्रत मुषस्तिस्रो अवर्धयन्"-इति। तदिह उषस्त्रित्वश्रवणान दीर्घत्वं गम्यते, तच्च सुमेरावेव सङ्गच्छत इति तदीयम्। तत्त्वतस्त्विह वरुणविज्ञानोपदेशके मन्त्रे नोषस-स्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'-लक्ष्य 'उषः' कालः 'तिस्रः वेनीः' त्रिविधाः जरायुजाजरायुजो-द्भिज्जाः 'वेनीः' प्रजाः 'अवर्धयन्' वर्धयन्ति इत्येवोपदिष्टम्। अथ वान्यत्र च "प्रजा ह तिस्रो अत्याय मीयुः"-इत्यादौ (ऋ० सं० ८. १०१. १४.) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम्। 'अव-र्धयत् + नमन्ताम्-इतिपदद्वयसन्धिजन्यम् अवर्धयन्नमन्ता मिति रूपम्; अथवा व्यत्ययकृतं बहुवचनम्।

उषसो दीर्घत्वप्रमाणाय तेन यदिद मनुदाहृता— "चित्रामा यत् समया भवति"–इति (ऋ० १. ११३. १७.), सेषा उषोविज्ञान-सूत्रान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम्।

तथोषसः पञ्चविभागव्याख्यानेन दीर्घत्वं सूचयितुं यत् तैत्तिरीयानुवाकस्योद्धरणम् (सं० ७. २. २०.), तदपि निरर्थकम्; तादृशविभागस्यार्यावर्तेऽप्युपयोगित्वात्।

किञ्चेद मपि विवेच्यम्,— सुमेरुप्रदेशीयोषसो दीर्घत्वं किं मार्यावर्तवासिना मस्माकं दृष्ट्या प्रतिपाद्यते, उत तत्रत्याना मिति। तत्रत्याना मिति चेत्, तेन कथं सिध्येत् तत्रत्यार्याणां वासः? अथ तत्रत्यानां तादृशमन्त्रज्ञत्वं प्रमेय मिति चेत्, तदपि नोपपद्यते; दीर्घत्वं ह्यापेक्षिकं भवति, न हि तत् उषोऽन्तरदर्शन-विरहादपि सम्भवति! तत् कि मेतेन उषोदीर्घत्वप्रकाशकमन्त्रा-न्वेषणेनेति धीषणावता तेनैव स्वय मालोच्य मिति॥

यदिदं श्रूयते— "तानीदहानि बहुलान्यासन् या प्राचीन मुदिता सूर्यस्य"–इति (ऋ० सं० ७. ७६. ३.), तदितः उषसः कतिदिनव्यापित्वं गम्यते स्फुट मिति तेषा माचार्याणां सुमेरुवासित्वे पञ्चमं प्रमाण मित्याह। अस्माकं तु नात्र श्रुतौ किञ्चि-ज्ज्ञापित मर्थतत्त्वं प्रतीयते, प्रतीयते तु यज्ञा मानन्त्यम्; तदिहाप्येवमेषुधीमन्तो भूमिदेवा एव प्रमाणम्॥

उषःशब्दस्यानेकत्र बहुवचनान्तप्रयोगोऽप्यत्र यस्कं प्रमाणम्, तदिदं षष्ठं स्यात्। तद्यथा तैत्तिरीयब्राह्मणे मन्त्रः—

"इमा एव ता उषसो याः प्रथमा व्यौच्छन्।
ता देव्यः कुर्वते पञ्चरूपा। शश्वतीर्नावपृज्यन्ति।
न गमन्त्यन्तम्"–इति (२. ४. ६. १४.)।

प्रज्ञाता"-इति (१. ७. ६.)। तदेवं कौषीतकिब्राह्मणग्रन्थ-प्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि तदादिपुरुषाणां हिम-वदुत्तरखण्डवासित्वेनैवैषोत्तरदिक्स्तुतिः सङ्गच्छत इति तत्र पक्ष-हेतुवर्णनम्। अथ ब्रूमः — ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका स्तुतिः; ऐतरेयकाले कुरुपञ्चालशिविसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम्। मध्यदेशापेक्षयोद्यानजनपदस्योत्तरत्वं सर्वैरभ्युपगन्तव्यमेव। एष एवोद्यानदेशो राजतरङ्गिण्यां सुव्वानक इत्युक्तः; तस्यास्य विद्यानिवासत्वेन स्तुतिरन्यत्रापि। स एष काश्मीर-सन्निहित उद्याननामजनपदोऽतिशो विद्यानिलय इति कथं धावेम हिमवतोऽप्युत्तरमिति।

(७) श्रूयते हि — "तोकं पुष्येम तनयं शतं हिमाः"-इति (ऋ० सं० १. ६. ८४.) आशीर्मन्त्रः। एव मन्यान्योऽपि। तदत्र विवेचनीयम्, एवं हिमर्त्वोऽब्दपरिगणनं तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपातस्यातिशय्यं विद्यते सदैव, नात्र तथोपलभ्यते; अपि त्वासियामध्यभूभागस्थो बलुतागकृताग्पर्वतयोरन्तराल-प्रदेशस्तु नूनं तादृश एवेति तत्रैवासीत् पुरार्याणा मादिवास इति प्रमाणयितुं प्रबलोऽयं हेतुः समर्थः। अत्र ब्रूमः— "यदि शिशिरर्तुवाचिहिमशब्देनाब्दपरिगणनश्रवणात् हिमशब्दस्याब्दवाचि-त्वेन व्यवहाराद्वा स्यादस्मत्पूर्वपुरुषाणां हिमर्तुप्रधानदेशवासित्वानु-मानम्, तर्हि शरदृतुवाचिशरच्छब्देनाब्दपरिगणनश्रवणात् शर-च्छब्दस्याब्दवाचित्वेन व्यवहाराद्वा किं न स्यात् तेषां शरदृतुप्रधान-देशवासित्वानुमानम् ? अस्ति तथापि श्रवणं बहुत्रैव। तद्यथा—

"तिस्रो यदग्ने शरदस्त्वा मित्"-इति ऋ० सं० १. १२. ७२.।

"शतं मिन्नु शरदो अन्ति देवाः" इति ऋ० सं० १. १४. ६०.।

"शतं नो रास्व शरदो•——•ऽश्यामायूंषि"–ऋ० सं० २. ६. २७।
"पश्येम शतं शरदो जीवसे धाः"-इति ऋ० सं० ३. ३. ३५।
"यतिजीवाति शरदः शतम्"–इति च ऋ० सं० १०. ८५. ३९।

वस्तुतस्त्वार्याणां न कदापि हिमर्त्तुमात्रभोगीकत्व मासीत्, न च कदापि शरदृतुमात्रभोगीकत्वम्; अपि नाम "शरत्सु ता अस्या ओषधयो भवन्ति, शीर्णा आप इति वा"-इति यास्कोक्तेः ( ४. ४. ४. ) शृणाति हिनस्ति प्राणिनः इति शरच्छब्दव्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्व मासीदार्याचार्यसम्मत मिति तस्मात्तेरब्दात्मकत्व ममानि तैरिति प्रतीयते। सति चैवं तस्याब्दावयवत्वे, हिमर्त्तोरब्दावयवत्वं सुतरां सम्पन्नम्। अत एवाब्दगणनाप्रसङ्गे शरच्छब्दहिमशब्दयोरन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे, सङ्गच्छते च तयोः शब्दयोर्गौण्यावृत्त्याब्दवाचित्व मपीति।

(८) अपि श्रूयते— "उत्तरं गिरि मति दुद्राव"-इति ( श० ब्रा० १. ८. १. )। 'उत्तरं गिरिं' हिमालयम् 'अति' अतिक्रम्य उपरि 'दुद्राव' द्रुतगमनं कृतवानिति च तत्सम्मतोऽर्थः। तदस्मादपि वचनात् हिमालय मुल्लङ्घ्य इहागमनं सुव्यक्त मिति तेषां तादृशानुमानेऽग्रमो हेतुः। अत्र ब्रूमः— तस्याः श्रुतेराद्यन्तपर्यालोचनया अतिशब्दार्थालोचनया चैतद्विपरीत एवार्थः प्रतीयते। तथाहि— "स औघ उत्थिते नाव मापेदे। तं स मत्स्य उपन्या पुप्लुवे। तस्य शृङ्गे नावः पाशं प्रति मुमोच। तेनैत मुत्तरं गिरि मतिदुद्राव। स होवाच। अपीपरं वै त्वा। वृक्षे नावं प्रतिबध्नीष्व। तं तु त्वा मा गिरौ सन्त मुदक मन्तश्छैत्सीत्। यावद्यावदुदकं समवायात् तावत्तावदन्ववसर्पासीति। स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणम्"-इति पूर्वं तच्छतपथ-

कालब्दस्थायि च तेषां जीवनम् ? श्रुतिसिद्धं शतायुष्ट्वञ्च तेषां कथ-ङ्कार मुपपद्यत इति ।

इदमपर मपि विवेच्य मस्ति,—यथा नवग्वा पदं नवमासात्मक-वर्षवाचकम्, दशग्वा पदं दशमासात्मकवर्षवाचकं चेति मन्यते, तथैव शतग्विपदं किं शतमासात्मकवर्षवाचकं मन्तव्यम ? श्रूयते तु शतग्विपद मपि ; तद्यथा—

"शनैश्चिदन्तो अद्रिवोऽश्वावन्तः शतग्विनः ।
विवक्षणा अनेहसः" इति ऋ० सं० ८.४५.११ ।

"आ न इन्द्रो शतग्विनम्"-इति च ऋ० सं० ८.६१.६ ।

वसुमत्स्येवमादिषु स्वमतपोषकत्वदर्शनं तस्य नूनं पाण्डु-रोगिणां सर्वत्र पीतदर्शन मिवैवेति मन्यामहे वयम् ॥

यत्तु निशाङ्कितं तेन,— वैदिकमन्त्रादिषु देवयानशब्दतः सूर्यस्य सुमेरुयान मुत्तरायण मवगम्यते, पितृयानशब्दतश्च सूर्यस्य कुमेरु-गमनं दक्षिणायनम् ; तथा च सुमेरुप्रदेशेषु देवयानेऽहः सम्पद्यते, पितृयाने च रात्रिरतो देवयानपितृयानशब्दान्वितमन्त्राणां तत्रैव रचना बभूवेति तत्रार्यादिवासस्येद मेकादशं प्रमाण मिति । एतच्च सर्वं स्यात् प्रेक्षावतां परीक्षणामर्ह मेव । तथैवम्,— मध्यभूभागत एव हि उत्तरायणदक्षिणायने परिदृश्येते, उत्तरदक्षिणकेन्द्रभू-वासिनां तु नैते समधिगम्ये ; नतु किमु देवयानपितृयानशब्दार्थतो दिवानिशीथादिसमुद्भावनादिविचारेणेति । यच्चोक्तं इदम्या एवमया देवयानपितृयानशब्दान्वितमन्त्रदृष्टारो बभूवुरिति स्वीया-र्थोऽपि देवयानार्थस्तु सुमेरुगमनमार्गः, सुमेरोश्च देवस्थानत्वकथन मार्यपूर्वपुरुषावासनिबन्धन-गौरवसूचक मिति, एतदप्यसङ्गतम् ; शतपथब्राह्मणादौ (१४.८.१.) देवयानपितृयानशब्दयोरपरार्थ-

प्रतीतेः, सुमेर्वादेर्देवस्थानत्वे स्वीकृतेऽपि तत्रास्मदादिपुरुषाणां वासस्य हेतूपलाभाभावाच्चेति स्वच्छधिया ध्यातव्यम् । वस्तुतस्तु 'देवाः' द्युस्थाः अग्निप्रभृतयो 'यान्ति' गच्छन्ति, येन मार्गेण, स एव भमण्डलादिभ्रमणमार्गो देवयानाख्यः ; तथा 'देवाः' द्युस्था रश्मयः पृथिव्यादौ गच्छन्ति, यैर्मार्गैस्तेषाञ्च सुतरां देवयानकत्वम् ; तैरेव मार्गैः पृथिव्यादिस्थानेश्वरान्तनिवासिनो विनिर्मुक्तस्थूलदेहा जीवा रश्मिभिराकृष्यमाणा द्युलोकं गच्छन्ति । तथैव पितृस्थानानां चन्द्रमण्डलादीनां भ्रमणमार्ग एव पितृयानम् : अपि अन्तरिक्षस्थं यमनामवायुविशेषाभिकृतं चन्द्रलोक मध्यं वा तत्सन्निहितं पितृलोकं त्यक्तस्थूलदेहा अचिरादिसहायाः गच्छन्ति येन, स एव मार्गः पितृयानाख्यः । तिलकोदाहृतमन्त्रास्त्वेवमेव बुध्यते । तत्र प्रथम एषः ( ऋ० सं० १. १८३. ६. ) --

"अतारिष्म तमसस्पार मस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम्" इति ।

अस्यार्थः-- हे 'अश्विनौ' प्रातरुषःसमागमप्रथमसुदृश्यदेवौ ! 'देवयानैः पथिभिः' द्युस्थैः स्वमार्गैः 'इह' पृथिव्याम् 'आयातम्' आगम्यताम् । तथाचेह युवयोरुदयात् 'अस्य तमसः' रात्रिजन्यान्धकारस्य 'पारम्' पर्यन्तम् 'अतारिष्म' उत्तीर्णाः स्मः । 'वां प्रति' 'स्तोमः' कृतज्ञतासूचकं स्तोत्रम् अस्माभिः 'अधायि' । 'इषम्' अन्नम्, 'वृजनं' मनोबलम्, 'जीरदानुं' जरान्तव्यापिनं सुदीर्घ-जीवनञ्च 'विद्याम' लभेम, वय मिति । एवञ्चाश्विनोरुदयकाले जाग्रतः स्तोत्रगानं कुर्वतोऽन्नादीनि अवश्यम्भावीनीति समर्थजनैस्तथा कर्त्तव्य मित्युपदेशः फलितः ।

अथापरः ऋ० सं० १, २. १८ पूर्वार्द्धः —

आसीदित्यत एव देवनिलयत्वेन स मेरुर्वर्णित इति सिद्धान्तितं निराबाध मिवेति। अहो बत! तथैव सिद्धान्तोऽपि दरिद्राणां मनोरथ इवैव प्रतिभात्यस्माकम्। न हि सूत्युषस्य देवाना मित्यस्य सुमेरुवासिनः मित्यर्थावगतौ किञ्चिन्मान मस्ति; अस्ति च ततोऽन्यत्र। मनुसंहितायान्तु अस्मत्संवत्सरकालमितं भवति देवाना महरित्युल्लिखित मिति न सत्यम्, परं न तत्र सुमेरोर्गन्धोऽ प्यस्तीत्यपि नासत्यम्। एवं महाभारतादौ सुमेरुवासिनां देवत्वं वर्णित मिति च सत्यम्, पर मिहापि न तेषां देवानां मासस्व- यंनवत्सरमानान्यभिहितानी अपि नासत्यम्। आतस्तानि तु सुमेरु- प्रदेशीयदेवशब्दगाथानां नानि च भवन्ति कथमतानि? आयुःपरिमाणञ्च तेषां तदब्दमानतो भवति कीदृश मित्यपि ज्ञेय मेव। अप्येवं "शतायुर्वं पुरुषः"-इत्यादिश्रुतिसिद्धं शतायुष्ट्वं तत्प्रदेशवासिनां तद्देशीयाब्दमानेनैव भवति चेत् कथं न तत्र श्रुतिविरोधः सम्पद्यते? वेदेषु हि यच्छ्रूयते मानवानां पूर्णायुः शतवर्षाणीति, तन्नून मस्मद्देशीयाब्दमानतः एवेति मत मेवैतच्चिन्त्य मेव। किञ्च यथा सुमेरुप्रदेशेषु "दैवे रात्र्यहनी वर्षम्"-इति मनुवचन मुपपद्यते, तथैव कुमेरावपि किं नोपपद्यते इत्यपि विचार्य मेव! विचारितेषु चैतेषु सुमेरोरार्यादिवासनिर्णयाय तेन प्रदर्शितं प्रमाणपारायणं कुतो न जलमध्यगतलवणवद् विलीयतेत्यपि ध्येयम्।

वस्तुतो महाभारतादौ यद् वर्णितं सुमेरोर्देवलोकत्वम्, तत्त्वाधिविक मित्यस्माभिर्मन्यत एव। यथेह सौरजगति भूलोकान्तरिक्षलोकद्युलोकविभागास्तथैवास्मच्छरीरेऽपि मन्यन्त एव शास्त्रविद्भिरध्यात्मदेशीयैः। एव मन्निवायुप्रभृतिज्योतिषां प्रधानतो

तत्त्वतस्त्वे तदार्यावर्त्तीययोरेवाहोरात्रमानयोर्वर्द्धनकालप्रकाशने एव तस्याः पङ्क्तेस्तात्पर्यम् ; दक्षिणायने हि वर्द्धत एवेह रात्रिमानम् , तथोत्तरायणे च दिवामान मिति। किञ्चात्रैव मन्त्रे यच्छ्रूयते 'समानो अध्वा स्वस्रोः'-इति, भगिनीरूपयोः रात्र्युषसोः सञ्चर-मार्गः एक एव, येनाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपीति तदर्थः। तदेव मिदं स्वप्नदृष्टाश्रुतपूर्वरत्नोद्धरणाय वेदाविस्तादि-जलधिप्लवमानस्याग्रहीनस्य तस्य कुशकाशावलम्बनं सर्वथा निरर्थकमेव भवितव्यं तत्रास्ति किमु शोच्य मिति दिक् ॥

अथैवम् "अनु प्रत्नस्यौकसो हुवे ( १. ३०. ९. )"— इत्यादि-श्रुतिगम्य मार्याणां प्रत्नौकस्त्वं कतमस्य प्रदेशस्य स्यान्मन्तव्य मिति चेत्, अत्रोत्तरन्तु "स चार्य्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिण-भागे सुवास्तुप्रदेशे एवासीत्"-इत्यादिनोक्त मिवैव द्रष्टव्यम् ( २२पृ० १८पं० )। अपि "अनु प्रत्नस्यौकसो हुवे"-इत्युक्त्यवलम्बनमात्रेण किं सर्वेषा मेवार्याणा मादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात सङ्गतम्, किमु स्यात् तस्मात्तद्दृष्टुरेवेति च विवेच्यम्।

श्रूयते ह्येवम् ( ऋ० सं०. ३. ५८. ६. )—

"पुराण मोकः सख्यं शिवं वां
युवोर्नरा द्रविणं जह्नाव्याम्।
पुनः कृण्वानाः सख्या शिवानि
मध्वा मदेम सह नू समानाः"-इति।

एतस्य मन्त्रस्य द्रष्टुः शुनःशेपस्य पूर्वावास आसीद् जाह्नव्याः कूले जह्नूनामाधिपत्ये ( ऐ० ब्रा० ७. ३. ६. ) जह्नुमुन्याश्रम-कान्तारे ; तत एव हरिश्चन्द्रपुत्रो रोहितः तं क्रीत्वा सारस्वतप्रदेशं आनीतवान्। तदाख्यान मिहैव ( ७. ३. १—६. ) श्रुतम्।

गङ्गोत्तदाश्रमारभ्यं तथापि जाह्नवप्रदेश इति गङ्गाप्रभवे हिम-
वत्पृष्ठे प्रसिद्धम्। तत एव जाह्नवप्रदेशात् गङ्गायाः प्रवाहगम-
नाद् गङ्गायाश्चापरं नाम जाह्नवीति। तदित्थम् "जह्नु
प्रजस्यौकसो ध्रुवे"—इति श्रुतिः सिद्धान्तपक्षेऽपि सुसङ्गच्छत एव।

अपिवा हिमवत्पृष्ठस्थौकोनामनदीतीरभूमय एव प्रजौकसः;
तत्र चासीत् केषाञ्चिदार्याणां पुरा वास इत्यपि सुवच मिति॥

इदानीं सैषार्यावर्त्तभूमिः पश्चिमत उत्तरतश्च क्रमात् सङ्कुचिता,
दक्षिणस्यामाय: पूर्ववदेव, पूर्वस्यान्तु कुरुक्षिङ्गतैत्कुत्कल-राढ़-
गौड़-वङ्ग-नरक-प्रदेशा अप्यद्यार्यावर्त्तान्तर्गताः पुण्यभूमय एव
गण्यन्ते; अतोऽत्यवाङ्गाद्याश्चात्र युरोपादीनां म्लेच्छदेशत्वं मत्वा
तत्र गन्तुं न ह्यद्यैनोत्सहन्ते! कालो हि बलवत्तर इति॥

अथ प्रकृत मनुसरामः। एतस्मिन्नेवार्यावर्त्तेऽस्यैतरेयस्यासीद् वास
इति स्वीकृतेऽपि, तदानीन्तनार्यावर्त्तस्वरूपेऽभिज्ञातेऽपि, कतम-
स्मिन् प्रदेशे स उवासेति निर्णयोऽसम्भव इव प्रतिभात्यस्माकम्;
वक्ष्यमाणप्रकारेणास्य पाणिनिशास्त्रादिभ्योऽतिप्राचीनत्वनिर्णयात्।
एव मपि तत्र कृतेऽतियत्नेऽवगम्यते स्यादैरावतीतटसन्निहिते क्वचित्
प्रदेश इति। श्रुतं ह्यत्रैकत्र ऐरावतीपारदृष्टान्तः—"यथा सैरावतीं
नावं पारकामाः समारोहेयुः"—इति (६.४.५.)। इह 'सा' इति
द्वितीयैकवचनस्य सौ रूपम्, ता मित्यर्थः। सायणेन तु सैरावती
मित्येकं पदं नाव मित्यस्य विशेषणं कृतम्, समुद्र मित्यध्याहृतञ्च।
तन्न रोचतेऽस्माकम्; अकृतेऽध्याहारेऽपि सम्भवेऽर्थेऽध्याहारस्या-
नौचित्यात्, समुद्रस्यैवं सर्वदैव नावा तरणं सर्वदेशीयानां सर्वेषा
मनुपलम्भाद् दृष्टान्तयोग्यत्वाभावाच्चेति। सैषा नदी संहिताकाले
परुष्णीति प्रसिद्धासीत्, तदुक्तं निरुक्तकारेण "इमं मे गङ्गे"—इति

मन्त्रस्य व्याख्यानावसरे "इरावतीं परुष्णीमाहुः"-इति ( ९. २६. ५. )। तद्देव मन्त्रैवार्यावर्त्ते इरावत्या नद्याः सन्निधौ कस्मिंश्चि-ज्जनपदे स विरराज महिदास ऐतरेय इति सिद्धम् ॥

---

( ४ )

अथ कः कालोऽस्यैतरेयस्येति विचार्यम्। श्रूयते हि ऋक्संहितायां चतुर्दशर्चं सूक्त मिदम्— "प्रैते वदन्तु प्र वयं वदामः"-इति ( १० ९४. १—१४. )। तदिदं सर्वचरुनामजनपदे अर्बुदनामर्षिणा दृष्टम्। तदाहैतरेयः— "देवा ह वै सर्वचरौ सत्रं निषेदुः, ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"-इति ( ६. १. १. )। तस्मिन् सर्वचरौ अर्बुदोदासर्पणी, नामैका प्रपदासीत्। प्रपद्=जलप्रपातो निर्झरो वा। ऐतरेयकालेऽपि सा प्रपदासीत् प्रसिद्धा। तदुक्तं तत्र तदुत्तरम्— "तत्राप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"-इति। सैषा प्रपत् यास्ककालात् पुरैवाभवद् विलुप्तेति गम्यते, अन्यथा तदानीमपि तन्नाम निरुच्येत तेन, यथा विपाशः। तथाहि— "आर्जीकीये मृणोह्या सुषोमया" -इति ( ऋ० सं० १०. ७५. ६. ) ऋगंशव्याख्यावसरे निरुक्तं तेन— "आर्जीकीयां विपाडित्याहु०—०पूर्व मासीदुरुञ्जिरा"-इति ( निरु० ९. ३. ५. )। तदेवम्— यास्कसमये या नदी विपाडिति प्रसिद्धा, सैवासीत् तत्पूर्वकाले आर्जीकीया, ततः पुरा उरुञ्जिरेति च व्यक्तम्। एवमेकस्या एव नद्याः कालभेदात् त्रिधा

प्रसिद्धिर्दर्शिता ; नात्र तथा ऽर्बुदोदासर्पिण्याख्यानादिकं नामा-दिकं [illegible] ; इत एव गम्यते ततः पुरैव सा विद्युता, विभिन्न[illegible]ऽपरिचेया वाभूदिति। तथा चाय मैतरेयो निरुक्त-कृतोऽस्माद् यास्कात् पूर्वतनः। उपलभ्यते चैत ऐतरेयतोऽपि बहूनि वचनान्युद्धृतानि यास्केनेति। तद्यथा— "यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट् करिष्यन्निति ह विज्ञा-यते"—इति निरु० ८. २. ७। एतत्स्थानात मैतरेये ३. १. ८।

भगवता पाणिनिमुनिना यथाय मितराशब्दः शुभ्रादिगणे पठित (४. १. ११२.), यतः सम्पद्यते इतराया अपत्यं पुमानैतरेय इति ; गणकारश्च पाणिनिरेवेति ध्वनितं पूर्वापरावरेतिसूत्रभाष्ये ; अतोऽवगम्यते अय मैतरेयः पाणिनितोऽपि पूर्वतन इति। अपि नडादिगणे (पा० सू० ४. १. ९९.) आश्वलायनशब्द-मूलस्य अश्वलशब्दस्य पाठाच्चावगम्यते तदेव ; आश्वलायनाचार्य पूर्वतनइतिसिद्धान्तात्। सूचितञ्चैतत् "छन्दोगौक्थिकयाज्ञिक-बह्वृचनटाञ्ञ्यः"—इति (पा० ४. ३. १२९.)। अनेनैव सूत्रेण छन्दोगानां धर्म्मो आम्नायो वेत्यर्थे सिध्यति छान्दोग्य मिति पदम् ; तथा च छान्दोग्यात् परभवत्वं पाणिनेर्नूनं मन्तव्यम् ; श्रूयते च तत्र छान्दोग्ये "तद्धिस्माह महीदास ऐतरेयः"—इति (३. १६. ७.)। इतोऽप्यसन्दिग्ध मस्य पाणिनिपूर्वजत्वम्।

कथञ्चिदाश्वलायनोऽपि नून मेतस्मादैतरेयात् परतनः ; तत्र तत्र ऐतरेयनामश्रुतेः। तद्यथा — "अन्तरेण हविषी विष्णु-मुपांश्वैतरेयिणः"—इति आश्व० श्रौ० सू० १. २. १२; पुनः २. १. ३, १७; १. ११ इत्यादीनि च।

[illegible] शिशिराश्वलायनात्तस्य; पूर्व-

चाय मैतरेयः पूर्वतनः ; दृढीभूतमस्माकं तत्रादर्शनात् । तदिद मनुपदं प्रतिपादयिष्यामः शाखाविचारप्रसङ्गे ।

एतेन यत् सिद्धान्तितं केनचित् पाश्चात्येन विदुषा—"इहैतरेये 'पारिक्षितस्य जनमेजयस्य'-इति (७. ५. १.)-श्रवणात् स्यादय मैतरेयो जनमेजयाख्य राज्ञः परभवः"-इति, तन्नून मपास्तम् । वस्तुत एतन्नामश्रुतित एव अर्जुनपौत्रस्य परिक्षिन्नाम बभूव, बभूव च तथा तत्पुत्रनाम जनमेजय इत्येव स्यात् सर्वसामञ्जस्य मिति ।

अथ यदत्र श्रूयते ( ३. ४. ५. )—

"तदेषाभियज्ञगाथा गीयते—

यदस्य पूर्व मपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम् ।

अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति" -इति । तदेतेनास्य शाकलाचार्यात् परभवत्वं स्पष्टम् । एष च शाकलः शकलस्यानन्तरापत्यं नूनम् ; गोत्रे तु "गर्गादिभ्यो यञ् ( पा० ४. १. १०५ )"-इत्येतेनैव भाव्यम् , तथाच सम्पद्यते शकलस्य गोत्रापत्यं पुमान् शाकल्य इति । मुद्रिते ऐतरेयारण्यकभाष्ये ( ३. २. १. ) यद् दृश्यते 'शकलस्य पुत्रः शाकल्यः'-इति, तद्व्यात् गोत्रविवक्षयैव ; अनन्तरापत्यविवक्षया यञोऽप्रवृत्तेः । अपि वा मुद्राशोधकप्रमादत एव तत्र तथा पाठः सम्पन्नः ; 'शकलस्य पौत्रः'-इति, 'शाकलस्य पुत्रः'-इति, 'शाकलस्य गोत्रः'-इति वा स्यात् तत्रत्यपाठो विशुद्धः । ये तु शाकल्यशिष्याः शिशिरादयः, ते चासन् शाकला एवोच्यमानाः ; छात्रेऽपि विवक्षिते "गोत्रे लुगचि"-इति ( पा० ४. १. ८९. ) गोत्रप्रत्ययस्य यञो लुग्विधानात् । परं नात्र यज्ञगाथायां तेषा मन्यतमस्य [illegible] ; [illegible] ऐतरेयतोऽतिप्राचीनगाथायाम्

इतरेभ्योऽनन्तरभवस्य शाकल्यस्य नामधेय मिति । तेषां [illegible]-
भवत्वं त्विहैवोपरिष्टादुपपादयिष्यामः ।

"अपत्यं पौत्रप्रभृति गोत्रम्"–इति (४. १. १६२.) पाणि-
न्युपदेशात् शकलस्य गोत्रापत्यत्वं तु शकलपौत्रस्य, शकलप्रपौत्रस्य,
शकला त्ततमाधिकपुरुषस्य च स्वीकार्य मेव ; तदेवं शकलगोत्र
इति विवक्षिताः सर्वे एव पुरुषाः शाकल्य इत्याख्याता भवन्ति ।
अत एव ऋक्प्रातिशाख्ये 'शाकल्यस्य'–इत्येतस्मादुल्लिखितः प्रसि-
द्धस्य पदकारस्यैव शाकल्यस्य बोधः स्यादिति क्वचित् 'स्थविरस्य
शाकल्यस्य'–इत्युक्तम् (१अ० २प० ८व०), क्वचित् (१. ४. १.)
'शाकल्यपितुः'–इत्युक्तम्, क्वचिन्निर्विशेषणश्च 'व्याडिशाकल्य-
गार्ग्याः'–इति (३. १. ३.)। तदत्र व्याडिशाकल्यगार्ग्या इत्य-
त्राभिप्रसिद्धस्य पदकारस्य शाकल्यस्य ग्रहणं भवति, शाकल्यपिते-
त्युक्तया चास्यैव ग्रहण मिष्यते, स्थविरविशेषणविशिष्टस्तु ततोऽपि
प्राचीनः कश्चिद् बुध्यते । एवं यत् श्रूयते शतपथब्राह्मणे— "अथ
हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति"–इत्यादि
(१४. ६. ९. १.), सोऽयं याज्ञवल्क्यसमसामयिकः शाकल्योऽन्य
एव । अद्यप्रचलितायाः शाकलान्यतमाया आश्वलायन्याः शाखायाः
प्रवक्तुराश्वलायनस्याचार्यश्चाभवदपरः शाकल्यः । त इमे सर्वे एव
शाकल्याः प्रदर्शितगाथाख्यातशाकल्यात् परतनाः प्रतीयन्ते ।

तत्र स्थविरात् शाकल्यात्, विशेषणशून्यात् शाकल्याच्च नून
मयं परभवः ; एतदारण्यके तदुभयोरेव नामश्रवणात् । तथाहि—
"अथ शाकल्यस्य"–इत्यादि ३आ० १अ० २ख०, ततः "प्राची [illegible]
इति स्थविरः शाकल्यः ३आ० २अ० १ख०"–इति । किञ्चास्मिन्नार-
ण्यके (३. १. ३.) श्रूयते— "पृथिव्यायतनं निर्भुजम्, दिवा-

यतनं प्रतृणम्, अन्तरेणायतन मुभय मन्तरेण"-इति, ततस्तन्नि-र्भुजादिस्वरूपबोधनाय च श्रुत मिदम्— "यद्धि सन्धिं विवर्त्तयति, तन्निर्भुजस्य रूपम्; अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृ-णस्य; अथ उ एवोभय मन्तरेणोभयं व्याप्तं भवति"-इति। 'निर्भुज-शब्दः संहितावाची, प्रतृणशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्षितः'-इति चाह तद्भाष्ये सायणः। तदेवं पदपाठप्रादु-र्भावात् क्रमपाठप्रादुर्भावाच्च परतनोऽयं मत्र कोऽस्ति संशयः। पदकारस्त्वेकः शाकल्य एव। तथाहि "वने न वायो"-इति निगम-व्याख्यानावसरे निर्णीत मिदं भगवता यास्केन— "वेति च य इति च चकार शाकल्यः"-इत्यादि (६. ५. ५.)। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्यः'। तथाहि बह्वृक्प्रातिशाख्यम् — "इति प्र बाभ्रव्य उवाच च क्रमम्"-इति (२अ० ५प० ६व० २श्लो०)।

तदित्थ मेष महिदास ऐतरेयोऽप्यप्रचलितशाखाप्रवक्तुः शाक लाश्वलायनस्याचार्यात् शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तुः शाकल्यात् परतन इति सिद्धम्॥

---

(५)

अथेदानीं विचार्यं मस्ति, कीदृशाभ्यासन् तदानीन्तनाचार-व्यवहारविज्ञानानीति। तत्र प्रथमं तावत् तेषा माचारानालोचयितुं प्रवृत्ता वयं बहूना माचारपार्थक्यानां मूलं जातिपार्थक्य मुपल-भामहे, अतस्तज्जातिपार्थक्य मेव प्रथमं समासतो वर्णयामः—

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृति-ग्राह्या भवन्ति, न तथा ब्राह्मणत्वादयः ; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्याभ्युन्नति-सिद्ध्यर्थाः पूर्वं गुणकर्मानुसारतः पूर्वसामाजिकैः कल्पिताः। तदेतदिहापि श्रुतम्— "देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति"-इत्यादि १. २. ३.। तथा चाध्ययन मध्यापनं यजनं शंसनं स्तवन मुद्गानं ब्रह्मण्यं मन्त्रणादान मुपदेशदानादिकञ्चेति मुख्यानि मुखकर्माणि च येषां समाजेषूपलभ्यन्ते, तेषा मेव ब्राह्मणजातिः कल्पिता। क्षत्रियादीना मप्येवं बलादिप्रकाशकबाह्वादिभिरौपम्यं तज्जातिकल्पनाबीजम्। तदेव श्रुत मृक्संहितायाम् १०. ९०. १२—

"ब्राह्मणोऽस्य मुख मासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत"-इति।

एवञ्च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते। अत एव देवतिर्यङ्कृत्विक्छन्दःस्तोममन्त्राणा मपि सर्वेषां जाति-विभागाः समाम्नाताः। तद्यथा देवानाम्—

"ब्रह्म वै देवानां बृहस्पतिः"-इति तै० सं० २. २. ९. १।

एवमादिषु ब्रह्मशब्दार्थो ब्राह्मणः ; तथाहि—

"ब्रह्म हि ब्राह्मणः"-इति च श० ब्रा० ५. १. १. ११।

"अग्ने ! महाँ असि ब्राह्मण ! भारत !"-इति तै० ब्रा० ३. ५. ३।

अन्यत्राप्यत्र च— "ब्रह्म ह्यग्निः"-इति श० ब्रा० १. ५. १. ११।

"ब्रह्म वै बृहस्पतिः"-इति श० ब्रा० ३. ९. १. ११.।

"तच्छ्रेयोरूप मत्यसृजत क्षत्रं, यान्येतानि क्षत्राणि ; इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति०—० [illegible]

असृजत, यान्येतानि देवजातानि गणश आख्यायन्ते ; वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति०—०स शौद्रं वर्णमसृजत पूषणम्”-इति श० ब्रा० १४. ४. २. २३, २४, २५ ।

तिरश्चां जातिविभागो यथा—

“ब्रह्म वा अजः”, “क्षत्रं वा अश्वः”, “वैश्य च शूद्रश्चानु रासभः”

-इत्यादि श० ब्रा० ६. ४. ४. १२—१५ ।

उद्भिदां जातिविभागो यथा—

“ब्रह्म वै पलाशः”-इति श० ब्रा० १. १. १. ४ ।

“क्षत्रं वा एतदोषधीनां यद् दूर्वा ; क्षत्रं राजन्यः” ऐ० ८. २. ४ ।

स्तोममन्त्राणां जातिविभागो यथा—

“ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशः,०—०

विशः सप्तदशः, शौद्रो वर्ण एकविंशः”-इति ऐ० ८. १. ४ ।

त्रिवृत्पञ्चदशसप्तदशैकविंशाः सामवेदीयस्तोममन्त्राः ।

छन्दसां जातिविभागो यथा—

“गायत्रच्छन्दसा ( ब्राह्मणः )”, “त्रिष्टुभच्छन्दसा ( क्षत्रियः )”

-इत्यादिरन्यो द्रष्टव्यः ऐ० ७. ४. ५, ६ ।

तैत्तिरीयसंहितायामप्येवमेव स्तोमदेवताच्छन्दःसाममनुष्य-पशूनां श्रेणीविभाग आम्नातो द्रष्टव्यः ( ७. १. ६—९. )। ततश्च, त्रिवृत्स्तोम-अग्निदेव-गायत्रीच्छन्दो-रथन्तरसाम-ब्राह्मणमनुष्य-छाग-पशूनां मुख्यत्वेनैकश्रेणीत्वम्, पञ्चदशस्तोम-इन्द्रदेव-त्रिष्टुप्छन्दो-बृहत्साम-राजन्यमनुष्य-मेषपशूनां बलवत्त्वेनैकश्रेणीत्वम्, सप्तदश-स्तोम-विश्वेदेवदेव-जगतीच्छन्दो-वैरूपसाम-वैश्यमनुष्य-गोपशूनां बहु-त्वेनान्नाद्यत्वेन चैकश्रेणीत्वम्, एकविंशस्तोम-अनुष्टुप्छन्दो-वैराजसाम-शूद्रमनुष्य-वाजिपशूनां पादोपजीवित्वेनैकश्रेणीत्वञ्चेति

[illegible]युक्तम् । एतु च स्त्रीमन्त्र[illegible]ण्वा पादोपजीवित [illegible] गुणतत्वाद् बोध्य मिति ।

तदेवं यद्यपि गुणकर्मानुसारतो ब्राह्मणाद्या जातयः [illegible] इति स्पष्टम्, तथापि पशुवृक्षमनुष्येषु सम्प्रति ता जन्मानुसारिण्य एव मन्यमाना भवन्ति । यथा मिष्टान्नबीजतो मिष्टान्नाणा मेव फलनं प्रायो नैसर्गिकम्, तथैव ब्राह्मणजीवादिस्त्रीजातानां ब्राह्मणादित्व मवश्यम्भावीत्येव तत्र हेतुः । एव मपि यथा क्षेत्रादिदोषतो वस्तुगुणान्यथाभावोऽपि दृश्यते, तथैव ब्राह्मणाजीरसजाता अप्यब्राह्मणादयो भवन्तीत्यपि नादृष्टचरम् । अत एव "जातो नार्या मनार्यायाम्"-इत्याद्यपि स्मृतं मन्वादिभिः, इह चोद्धृतं तत् पुरस्तात् ( १७ पृ० ८पं० ) ।

अथ तेषां ब्राह्मणादिचतुर्वर्णानां स्वभावादय इहैतरेये यथा वर्णितास्त एवेह क्रमात् प्रदर्श्यन्ते । तत्र स्वभावाः—

ब्राह्मणानाम्— आदायित्वम्, आपायित्वम्, अवसायित्वम्, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्मा विशेषतो लक्षिताः । 'आदायी' आदानं ग्रहणम्, प्रतिग्रहादिना जीविकादीना मादानकारी । 'आपायी' अपायस्त्यागः, दानादिना धनादीनां त्यागकारी । 'अवसायी' अवसाय सिद्धान्तः, विद्याबलेन सर्वतत्त्वानां निश्चयकारी । 'यथाकामप्रयाप्य' प्रयाणं युद्धाय प्रस्थानम्, तत्र राजादिभिः सेनानायकत्वादिना प्रेर्यः 'प्रयाप्यः', काम मनतिक्रम्य यथाकामम्, स्वकामनानुरूप मिति यावत्; तदेवं राज्यरक्षार्थं युद्धाय प्रयाण मिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्यः' । तदेतदिह ७. ५. १ द्रष्टव्यम् । क्षत्रियाणान्तु— [illegible] [illegible], [illegible]पकारित्वम्, नैजस्त्वम्, [illegible]

वर्णनीयम्। वैश्यानां खलु—अन्यस्य बलिकृत्त्वम्, अन्यस्य आद्यत्वम्, यथाकाममध्येयत्वञ्चेति त्रीणि लिङ्गानि। शूद्राणां हि—अन्यस्य प्रेष्यत्वम्, कामोत्थाप्यत्वम्, यथाकामवध्यत्वञ्चेति च वर्णितं तत्रैव (७. ५. ५. ६.)। अथ भक्ष्याः—

ब्राह्मणानां बलकारो भक्ष्यः सोमो निर्णीतः, क्षत्रियाणां न्यग्रोधोदुम्बराश्वत्थप्लक्षफलानि बलहेतुभक्ष्याणि निर्णीतानि, तथा वैश्यानां दध्येवैकं बलकरं भक्ष्यं सूचितम्, शूद्राणां त्वाप एव भक्षिताः सम्यग् बलकरा भवन्तीति च तत्र ७. ५. ३—६। अपरमपि—"एता वै प्रजा हुतादा यद् ब्राह्मणा अथैता अहुतादा यद्राजन्यो वैश्यः शूद्र इति"—इति ७. ४. १। अथायुधानि—

"एतानि वै ब्राह्मणस्यायुधानि यद्यज्ञायुधानि; अथैतानि—क्षत्रस्यायुधानि—यदश्वो रथः कवच इषु धन्व"—इति च तत्रैव। तानि च यज्ञायुधान्यन्यत्र परिगणितानि—"स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च, दृषच्चोपला चैतानि वै दश यज्ञायुधानि"—इति तै० सं० १. ६. ८. २, ३।

तदानीं मासीदपि क्षत्रियतोऽपि भूयस्त्वं ब्राह्मणानाम्। तद्यथा—"भूयान् वै ब्राह्मणः क्षत्रियादिति"—इति ७. ३. ३.।

शूद्राणां ब्राह्मणपङ्क्तावुपवेशनमप्यासीद्दोषावहम्। तथाहि—"दास्याः पुत्रः कितवो ऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति"—इत्यादि (२. ३. १.) समालोच्यम्। यज्ञकार्येषु गोदोहनादिष्वपि तेषां निषिद्धोऽधिकारः, तथा च तैत्तिरीयकम्—"शूद्र एव न दुह्यात्, असतो वा एष सम्भूतो यच्छूद्रः। अहविरेव तदित्याहुर्यच्छूद्रो दोग्धीति"—इति (ब्रा० १. २. ३.)। अत एव

तेषा मयज्ञियत्वम्। यज्ञे दीक्षितस्य देवभाव माषन्नस्य च मानस्य तैश्चायज्ञियैः सह वाक्यालापोऽपि निषिद्धः शतपथश्रुतौ—
"स वै न सर्वेणेव संवदेत ; देवान् वा एष उपावर्त्तते यो दीक्षते, स देवतानामेको भवति ; न वै देवाः सर्वेणेव संवदन्ते,—ब्राह्मणेन वैव, राजन्येन वा, वैश्येन वा [ संवदन्ते ] ; ते हि यज्ञियाः"-इत्यादिना ( ३. १. १. १०. )। शूद्राणां सामीप्य मप्यासीत्तदानीं क्लेशायेत्याम्नातम्—"तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्"-इति ३. १. ६। अत्र देवा इति सत्यवादित्वादिनासदेवत्वानां ग्रहण मिष्टम्, मनुष्यशब्देन चानृतभाषणादिमनुष्यधर्मवतां मूर्खाणां शूद्राणा मित्येव। तदिदं शूद्राणा मयज्ञियत्वम्, मूर्खाणां सामीप्यायोग्यत्वञ्चातिमूर्खत्वकदाचारत्वकदाचारत्वकदाकारत्वादिनिबन्धन मेव ; नान्यथा तान् प्रति कृतदुर्व्यवहारस्य प्रायश्चित्तशासनं विहितं श्रूयेत। तत्र यथा य० वा० सं० २०. १७, १—

"यच्छूद्रे यदर्ये यदेनश्चकृमा वयं
यदेकस्याधिधर्मणि तस्यावयजन मसि"-इति।

शूद्राणा मुपकृत्यर्थं यथायोग्यज्ञानोपदेशविधिश्च विहितो ऽत्र संहितायाम् २६. २. १—

"यथेमां वाचं कल्याणी मावदानि जनेभ्यः।
ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय"-इति।

चतुर्णा मेव वर्णानां हितप्रार्थने साम्यञ्च श्रुतं बहुत्र।
तद्यथा तत्रैव यजुःसंहितायाम् १८. ४८. १—

"रुचं नो धेहि ब्राह्मणेषु, रुचं राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु, मयि धेहि रुचा रुचम्"-इति।

आथर्वणिका अप्यामनन्त्येव मेव १९. ७. ८—

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु ।

प्रियं सर्वस्य पश्यत, उत शूद्र उतार्य्ये"—इति ।

चतुर्णां वर्णानां माह्वानप्रयोगपार्थक्य मपि श्रुत मन्यत्र—

"तानि वा एतानि चत्वारि वाचः,— एहीति ब्राह्मणस्य, आगह्याद्रवेति वैश्यस्य राजन्यबन्धोश्च, आधावेति शूद्रस्य"-इति श० ब्रा० १, १. ४. १२ ।

वाग्व्यवहारविषये त्वासीदिह बहूपदेशः । तद्यथा— "वाक् तु सरस्वती" ( ३. १. १. ), "वाग्वै सरस्वती" ( ३. १. २. ), "वाग्वै सरस्वती" ( ३. ३. १३. ) "वाचो वाव तौ स्तनौ, सत्यानृते वाव तौ" ( ४. १. १. ), "कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्, सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः" ( १. १. ६. ), "विदुषा सत्य मेव वदितव्यम्" ( ५. २. ८. ), "एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः, तस्मादाचक्षाण माहुरद्राक्षीरिति, स यद्यदर्श मित्याहाथास्य श्रद्दधति ; यद्यु वै स्वयं पश्यति न बहूनाञ्च नान्येषां श्रद्दधाति" ( १. १. ६. ), "अवत्येनं सत्यं नैन मनृतं हिनस्ति" ( ४. १. १. ), "विचक्षणवतीं वाचं वदेत्" ( १. १. ६. ), "असुर्या ह वा इतरा गिरः" ( ३. ५. ५. ), "मनसा वा इषिता वाग् वदति, यां ह्यन्यमना वाचं वदति असुर्या वै सा वागदेवजुष्टा" ( २. १. ५ ; ४. ३. ), "यां वै दृप्तो वदति, या मुन्मत्तः, सा वै राक्षसी वाक्" ( २. १. ७. ), "वाक् च मनश्च वर्त्तन्यौ ; वाचा च हि मनसा च यज्ञो वर्त्तते ; पूर्वं वै वागदो मनः" ( ५. ५. ८. ), "श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा सत्यं तदित्युत्तमं मिथुनम् ; श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोकान् जयति" ( ७. २. ६. ),

